अथ

# वेदान्तसारः ।

आपदेवकृतया दीपिकाख्यया व्याख्यया

समलङ्कृतः ।

# The Vedânta-Sâra

of Sadânanda, together with
the Commentary of

ÂPADEVA.

Benares:
Published by The Sanskrit Ratna-Mâlâ Publishing Society
and Printed at the Târâ Printing Works
by Freeman & Co., Ld.
1900.

मूल्यम् ।=) आणकषट्कमात्रम् ] [Price As. 6 only.

रत्नमालिका ४



Ratna-Mâlikâ 4.

अथ

# वेदान्तसारः ।

आपदेवकृतया दीपिकाख्यया व्याख्यया
समलङ्कृतः ।

# The Vedânta-Sâra

of Sadânanda, together with
the Commentary of
ÂPADEVA.

Benares:
Published by The Sanskrit Ratna-Mâlâ Publishing Society
and Printed at the Târâ Printing Works
by Freeman & Co., Ld.
1900.

मूल्यम् ।=) आणकषट्कमात्रम् ]    [Price As. 6 only.

# विज्ञापनम् ।

भाष्यवार्त्तिकादिकतिपयैर्ग्रन्थैः सागरतांगतेऽस्मिन्वेदान्तशास्त्रे दुरवगाहतामवलोक्य मन्दमतीनामपि व्युत्पित्सूनां मुमुक्षूणामनायासेनैव स्वल्पीयसाऽनेहसा करतलामलकवद्वेदान्तप्रतिपाद्यं सच्चिदानन्दलक्षणं ब्रह्म सकलवस्त्वभिन्नतया बोधयितुं संजातकरुणः पदवाक्यप्रमाणपारावारीणः श्रीमत्परमहंसपरिव्राजकाचार्य्यसदानन्दस्वामी वेदान्तसारं प्राणैषीत् । स्वल्पत्वेपि परिनिष्ठितलेखतयैतद्ग्रन्थस्य स्पष्टार्थबोधकत्वं व्याख्यानेन विना न सम्यक् प्रतिभातीति पूर्वविद्वद्वरैः सुबोधनीव्याख्यया समलङ्कृत्य वेदान्तसारःप्रकाशितः । अधुना च मीमांसावेदान्ताद्यनेकग्रन्थसम्पादकापदेवकृतां सुविचारमयीं मनीषिजनमनोविनोदक्षमां वेदान्तसारव्याख्यामिमामेवापदेवीमवधार्य्य अतिदुर्लभसंस्कृतपुस्तकानां संग्रहशीलस्य पण्डितगोविन्ददासगुप्तस्य बहु-

प्रयत्नेन लब्धानि देवाक्षरलिखितानि त्रीणि नवीनप्राचीनपुस्तकानि समालम्ब्य च प्रवृत्तोहं, निवेशयंश्चाधः पाठभेदान् श्रीकाशिकराजकीयप्रधानपाठशालायां विविधव्याकरणाद्याचार्यपरीक्षोत्तीर्णाडकरोपाह्वमुकुन्दशास्त्रिद्वारा परिशोधयन् रमणीयशीशकाक्षरैर्महता प्रयासेन 'तारायन्त्रालये'मुद्रणकार्यं समापयम् । सा चेयं विद्वन्मनोभृङ्गाणां रसव्यासञ्जनाय भवतुतमामिति जगदीशमर्थये । प्रयतन्तां च मदीयदृष्टिदोषेण मतिदोषेण शीशकाक्षरयोजकदोषेण वा जनितानि स्खलितानि सुविमृश्य निर्दोषतासम्पादनाय गुणैकपक्षपातिनो विद्वांसः सफलीकुर्वन्तु च मत्परिश्रममिति शम् ॥

श्रीकाश्याम्
१४–८–१८९९

श्रीकालीचरणमित्रः
सम्पादकः ।

# अथ वेदान्तसारस्य वर्णानुक्रमसूची ।

| विषयाः | पृ० |
|---|---|

---

# अथ टीकायाः सूची ।

# वेदान्तसारः ।

## तत्वदीपिकासहितः ।

[ १ ]

अखण्डं सच्चिदानन्दमवाङ्मनसगोचरम् ।
आत्मानमखिलाधारमाश्रयेऽभीष्टसिद्धये ॥

[ २ ]

अर्थतोऽप्यद्वयानन्दानतीतद्वैतभानतः ।
गुरूनाराध्य वेदान्तसारं वक्ष्ये यथामति ॥

[ ३ ]

वेदान्तो नामोपनिषत्प्रमाणं तदुपकारीणि शारीरकसूत्रादीनि च । अस्य वेदान्तप्रकरणत्वात्तदीयैरेवानुबन्धैस्तद्वत्तासिद्धेर्न ते पृथगालोचनीयाः । तत्रानुबन्धो नामाधिकारिविषयसम्बन्धप्रयोजनानि ॥

अनन्तगुणसंपन्नमनन्तभजनप्रियम् ।
अनन्तरूपिणं वंदे गुरुमानन्दरूपिणम् ॥ १ ॥

आपदेवेन वेदान्तसारतत्त्वस्य दीपिका ।
सिद्धान्तसंप्रदायानुरोधेन क्रियते शुभा* ॥ २ ॥

प्रतिज्ञागतवेदान्तपदं व्याचष्टे **वेदान्त** इति । उपनिषद्रूपम् आत्मनः प्रमाणमित्यर्थः यद्वोपनिषच्छब्देनात्मज्ञानमुच्यते तस्य प्रमाणं कारणमित्यर्थः तदनुसारीणि उपनिषदनुसारीणि आत्मप्रतिपादकानीत्यर्थः । क्वचित् तदुपकारीणीति पाठः तत्र उपनिषदामात्मनिर्णयार्थमपेक्षितन्यायप्रतिपादकानीत्यर्थः । शरीरमेव शरीरकं शरीरके भवः शारीरको जीवस्तमधिकृत्य प्रवृत्तानि सूत्राणि "अथातो ब्रह्मजिज्ञासे"त्यादीनि वेदान्त इत्यर्थः। ननु प्रेक्षावत्प्रवृत्त्यर्थमनुबन्धचतुष्टयं वक्तव्यं तत्राह **अस्येति** । अस्य प्रारिप्सितस्य ग्रन्थस्य तदीयैः वेदान्तीयैरित्यर्थः । ननु तस्यापि के अनुबन्धा इत्याशङ्क्य तान्वक्तुं सामान्यतस्तावदनुबन्धानाह **तत्रेति** । पुरुषमनुबध्नाति स्वज्ञानेन प्रेरयतीत्यनुबन्धः विषयादीनि च तादृशानीति भावः । ननु

* सम्प्रदायानुरोधेन क्रियते बालबोधिनीति पुस्तकान्तरे पाठः ।

वक्ष्यमाणानुबन्धचतुष्टयं वेदान्तस्येत्यत्र किं मानमिति चेत् शृणु अथातो ब्रह्मजिज्ञासेति सूत्रेण सूत्रितत्वमेव मानं । तथा हि अस्मिन्सूत्रे तावत्साकाङ्क्षत्वात्कर्त्तव्येतिपदमध्याहार्यम् । जिज्ञासापदाभिधेययोश्च ज्ञानेच्छयोरकर्त्तव्यत्वात् ज्ञानस्येच्छोपसर्जनत्वाच्च ज्ञानस्य फलत्वलाभाय च ब्रह्मज्ञानफलको विचारो जिज्ञासापदेन लक्ष्यते जिज्ञासापदशक्यज्ञानेच्छयोर्विचारेण सह साध्यसाधनरूपसम्बन्धसत्त्वात् गङ्गापदेनेव गङ्गापदशक्यप्रवाहसम्बन्धि तीरम् । न च प्रकृतिप्रत्ययात्मकपदद्वयाभ्यां कथमेको विचारो लक्ष्यत इति वाच्यम् । सुप्तिङन्तं पदमिति मते एतस्य एकपदत्वात् शक्तं पदमिति मतेऽपि न बाधकं वायुर्वै क्षेपिष्ठा देवतेत्याद्यनेकपदघटितार्थवादैर्विध्याकाङ्क्षितप्राशस्त्यलक्षणात् । एतेन वाक्ये न लक्षणेत्यपास्तम् अर्थवादानां वाक्यत्वात् लक्षणाबीजस्य पदवद्वाक्येऽपि तुल्यत्वाच्च । यत्तु शक्तस्यैव लक्षकत्वं न च वाक्ये शक्तिः तस्याः पदधर्मत्वात् अत एव जिज्ञासापदसमुदायेऽपि नैका लक्षणा तस्य यौगिकत्वेनाश-

क्तत्वादिति । तन्न । शक्तस्यैव लक्षकत्वमित्यत्र मानाभावात्। मीमांसकमते अशक्तस्यापि वाक्यस्य वाक्यार्थलक्षकत्वाच्च जात-पुत्र इति यौगिकस्यापि पदस्यावस्थाविशेषलक्षकत्वाच्च । नैया-यिकैरपि यौगिकस्य पदस्य लक्षकत्वाङ्गीकारात् । तन्मते हि अतीतादौ व्यभिचारेण लिङ्गं नानुमितौ करणम् किन्तु तज्ज्ञानम् । एवं च धूमादिति हेतुवाक्ये धूमपदं यथा ज्ञानल-क्षकं पञ्चम्युपस्थापितहेतुत्वस्य धूमेनान्वयात् तथा सामान्यवत्त्वे सति अस्मदादिबाह्यकरणप्रत्यक्षत्वादित्यत्रापि तादृशप्रत्यक्षत्व-स्य हेतुविभक्त्युपस्थापितहेतुत्वेनान्वयाज्ज्ञानलक्षणा वक्तव्या । तादृशप्रत्यक्षत्वपदं च यौगिकमेवेति न यौगिकस्य लक्षक-त्वमिति विरुद्धम्। वेदान्तिमतेऽपि पङ्कजादिपदानां तामरसादौ योग एव वृत्त्यन्तरकल्पने मानाभावात् । मण्डूकाद्यपेक्षया झटिति तामरसप्रतीतिस्तु दशसु शक्तस्य धेन्वादेश्च झटित्यु-पस्थापकस्य गोशब्दस्येव प्रयोगबाहुल्यात् । तामरसत्वम् तु लक्षणया भासते । योगात्पङ्कजनिकर्तृत्वेनैव भानात् वृत्त्यन्त-

रकल्पनातश्च लक्षणा युक्ता गङ्गापदस्येव तीरे । सा चेयं लक्षणा यौगिकपदे एवेति अस्त्येव यौगिकपदस्यापि लक्षकत्वम्। तस्माद्युक्तमुक्तं जिज्ञासापदेन ब्रह्मज्ञानफलको विचारो लक्ष्यत-इति । केचित्तु प्रकृत्या साध्यावस्थं ज्ञानं लक्ष्यते प्रत्ययेन च विचारो लक्ष्यत इति लक्षणाभेदं वदन्ति। तन्न। लक्षणाद्वये मानाभावात् । एकयैव लक्षणयोपपत्तेरित्यस्मद्गुरव इति दिक्। ब्रह्मज्ञानफलकश्च विचारो वेदान्तवाक्यविचार एव वेदान्तवाक्यैरेवाखण्डाद्वितीयब्रह्मप्रतिपादनात्। अतस्तेषामेव विचार्यत्वेन सम्बन्धः। ब्रह्मज्ञानं चानर्थनिवर्त्तकमिति तस्य फलत्वं युक्तम्। तथा चानर्थनिवर्त्तकब्रह्मज्ञानाय वेदान्तवाक्यविचारः कर्त्तव्य इत्यर्थः संपन्नः। अथशब्दश्चानन्तर्यार्थः तस्यैव चानन्तर्यं वक्तव्यं यदनन्तरं वेदान्तवाक्यविचारे प्रवृत्तिरवश्यं भवति। तादृशं च नाध्ययनादि कृताध्ययनस्यापि तत्राप्रवृत्तेः। किन्तु विवेकादि-साधनचतुष्टयं तदनंतरम् अवश्यं तत्र प्रवृत्तेः। अतः अथशब्देन साधनचतुष्टयसंपत्त्यानन्तर्यमुच्यते । ननु न वेदान्तवाक्यवि-

चार एव कर्त्तव्यः सन्ति अनेकानि कर्माणि अविनाश्यफल-साधनानि । अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति "अपाम सोमममृता अभूम" इत्यादिश्रुतेरित्येतच्छङ्कानिरासार्थो ऽतः शब्दः । अयमर्थः साधनचतुष्टयसम्पत्त्यनन्तरं वेदान्तवाक्यविचार एव कर्त्तव्यः यतः कर्मफलानामनित्यत्वं तद्यथेह कर्मजितो लोकः क्षीयते एवमेवामुत्र पुण्याजितो लोकः क्षीयत इत्यादिश्रुतिबलात् अवगम्यते । न च पूर्वश्रुतिबलान्नित्यत्वमेव किं न स्यादिति वाच्यं कृतकत्वाद्यनुमानानुगृहीतत्वेन "आभूत-संप्लवं स्थानममृतत्वं हि भाष्यत" इत्यादिस्मृतिबलेन च एतस्याः श्रुतेर्बलवत्त्वात् पूर्वश्रुतेश्च आकल्पक्षयं स्थितिरूपे नित्यत्वे तात्पर्यात् । तथा चावश्यं वेदान्तवाक्यविचारः कर्त्तव्य इति हेतुत्वमतः शब्देनोच्यते । एवं च साधनचतुष्टयसंपत्त्यनन्तरमनर्थनिवर्तकब्रह्मज्ञानाय वेदान्तवाक्यविचारोऽवश्यं कर्त्तव्य इति सूत्रार्थः सिद्धः । अत्र च वक्ष्यमाणानुबन्धचतुष्टयं स्पष्टमेवेति साधूक्तं वक्ष्यमाणानुबन्धचतुष्टयमथातो ब्रह्मजिज्ञासेति सूत्रेण

सूत्रितमिति एवं चेत्तदीयैरनुबन्धैरित्यपि युक्तमिति ॥ ३ ॥

[ ४ ]

अधिकारी तु विधिवदधीतवेदवेदाङ्गत्वेनापाततोऽधिगताखिलवेदार्थोऽस्मिन् जन्मनि जन्मान्तरे वा काम्यनिषिद्धवर्जनपुरःसरं नित्यनैमित्तिकप्रायश्चित्तोपासनानुष्ठानेन निर्गतनिखिलकल्मषतया नितान्तनिर्मलस्वान्तः साधनचतुष्टयसम्पन्नः प्रमाता।

अस्मिन्सूत्रे अथशब्देन प्रथममधिकारिणः उक्तत्वात्तं प्रथमं दर्शयति अधिकारी त्विति। अधिकारी तु प्रमातेति संबन्धः। अत्र प्रमातृशब्दःसदाचारयुक्तब्राह्मणादिपरः तेन च "स्त्रीशूद्रद्विजबन्धूनां न त्रयी श्रुतिगोचरे"त्यादिना निषिद्धाधिकारकस्त्र्यादीनां निरासः मैत्रेय्याः श्रवणं तु अर्थवादमात्रमिति द्रष्टव्यम्। तादृशब्राह्मणमात्रस्याधिकारं व्यावर्त्तयति साधनेति। तथा च साधनचतुष्टयसंपत्तिरधिकारिविशेषणम्। अत्र वदन्ति न साधनचतुष्टयसंपत्तिरधिकारिविशेषणं किन्तु मुमुक्षामात्रं कामाधिकारे कामनाया एव अधिकारनिमित्तत्वात्। किंच विवे-

कादीनां हि न क्वचित्साकल्येन श्रवणम् अपि तु कस्यचित् क्वचिच्छ्रवणम् । एवं च प्रथममेकशाखापर्यालोचनया किंचिद्विशिष्टस्यैव श्रवणकर्त्तव्यताप्रतिपत्तिर्जायते पश्चात्सर्वशाखापर्यालोचनया सकलविशिष्टस्य श्रवणकर्त्तव्यताप्रतिपत्तिर्वक्तव्या। तथा च सकलविशिष्टश्रवणकर्त्तव्यताप्रतिपत्त्या एकैकविशिष्टश्रवणकर्त्तव्यताप्रतिपत्तिर्बाधनीया एवं च प्रसज्ज्यप्रतिषेधप्रसङ्गः। किं च साधनचतुष्टयस्याधिकारिविशेषणत्ववादिनाऽपि विवेकादेर्मुमुक्षाहेतुत्वमवश्यं वाच्यम् । एवं च विवेकादीनां मुमुक्षाजननेनान्यथासिद्धेर्नाधिकारिविशेषणत्वम् । तस्माच्चरमभाविनी एका मुमुक्षैवाधिकारिविशेषणमिति । अत्रास्मद्गुरवः पुरुषविशेषणत्वेन हि श्रुतमधिकारिविशेषणं भवति यथोपनयनमध्ययनाधिकारिणः। शान्तो दान्त इत्येवमादौ च विवेकादिकं श्रवणाधिकारिविशेषणत्वेन श्रुतमिति तस्याप्यधिकारिविशेषणत्वम् । न च कामाधिकारे कामनाया एव निमित्तत्वम् । तथा सति राजसूयेऽपि स्वाराज्यकामनैव निमित्तं स्यात् न राजत्वं तथा च स्वाराज्यकामत्रा-

ह्मणादेरपि तत्राधिकारप्रसङ्गः । यदि च श्रुतत्वात् राजत्वमपि अधिकारिविशेषणं तदा विवेकादावपि तुल्यम् । न च विवेकादीनां मुमुक्षाजननेनान्यथासिद्धिः । मुमुक्षायां कारणीभूतस्यापि विवेकादेरधिकारिविशेषणत्वस्य पुरुषविशेषणत्वेन श्रुतत्वादावश्यकत्वात् । अन्यथा सामर्थ्यादेरपि स्वाराज्यकामनाजननेनान्यथासिद्धेर्न तत्स्यात् तथा चार्थी समर्थो विद्वानित्यादेर्व्याकोपः । न च प्रसज्ज्यप्रतिषेधः । सकलविशिष्टस्य श्रवणकर्त्तव्यताप्रतीतेरेकैकविशिष्टस्य श्रवणकर्त्तव्यताप्रतिपत्त्या विरोधाभावात् । न हि एकैकविशिष्टस्य श्रवणकर्त्तव्यताविधायकेन विवेकवता श्रवणं कर्त्तव्यमित्येवमादिना सकलविशिष्टेन न कर्त्तव्यमिति बोध्यते । तादृशपदाभावात् आर्थिकेऽर्थे मानाभावात् अर्थाद्धि अविवेकिना न कर्त्तव्यमिति भासते न तु विवेकवतापि इतरविशिष्टेन न कर्त्तव्यमिति । सकलविधाने एकविधानस्याप्यावश्यकत्वान्न विरोधः । तस्माद्विरोधाभावान्न प्रसज्ज्यप्रातिषेधः । न च लाघवादेका मुमुक्षैवाधिकारिविशेषणम् ।

राजत्ववत् पुरुषविशेषणत्वेन श्रुतत्वात् गौरवस्यापि न्याय्यत्वात् । तस्मात्साधनचतुष्टयसंपन्न एवाधिकारीति । साधनचतुष्टयसंपत्तौ हेतुमाह **नितान्तेति** । स्वान्तमन्तःकरणम् । अन्तःकरणशुद्धौ हेतुमाह **अस्मिन्नित्यादि** । **काम्येति** मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोरिति वचनादिति भावः । काम्यादिवर्जन-पुरःसरं नित्याद्यनुष्ठाने हेतुमाह* **अधिगतेति** । अखिलवेदार्थाधिगते निषिद्धे तावत्पापभयेन न प्रवृत्तिः नापि काम्ये तत्साध्यफलस्यानित्यत्वेन ज्ञानात्ततो विरक्तत्वात् । नात्मलाभात्परमित्यादिश्रुतेश्च परमपुरुषार्थात्मकज्ञानसाध्यकविचारोपयुक्तसाधनचतुष्टयसंपत्त्युपयुक्तान्तःकरणशुद्ध्यर्थं नित्यादिषु प्रवर्तेत इत्यर्थः । ननु अखिलवेदार्थाधिगमे सत्यादिवाक्येभ्यो ब्रह्मणोऽप्यवगतत्वात् विचारात्प्रागेवानर्थनिवृत्तेः श्रवणादिवैयर्थ्यं तत्राह **आपातत** इति । ननु किमापाततो ज्ञानं निश्चयः संशयो वा । आद्ये पूर्वोक्तदोषप्रसंगः तरति शोकमात्मविदिति

---

* अस्मिन्नित्यादिरित्यत आरभ्य हेतुमाहेत्यन्तः पाठः कुत्रचिन्न दृश्यते ।

श्रुतेर्ब्रह्मज्ञानस्यैव तन्निवर्त्तकत्वात् निश्चयत्वेनैव भ्रमनिवर्त्तकत्वदर्शनाच्च। न द्वितीयः। सदित्यादिवाक्येषु कोट्यन्तरोपस्थापकपदाभावात्तज्जन्यज्ञानस्य संशयत्वानुपपत्तेः। न चैककोटिकः संशयः संभवति। एकस्मिन् धर्मिणि विरोधे भासमाने नानार्थावमर्शस्य संशयलक्षणत्वेन तस्यानेककोटिकत्वात् स्वतन्त्रपरिभाषाकल्पने मानाभावात्। किंच सिद्धान्ते ज्ञानस्यायथार्थत्वं न परेषामिव व्यधिकरणप्रकारकत्वेन अनिर्वचनीयख्यात्यङ्गीकारात् किन्तु विषयमिथ्यात्वेन। संशयस्य तु अयथार्थत्वं सकलवादिसिद्धम्। एवं च सत्यादिवाक्यजन्यज्ञानस्य संशयत्वे ब्रह्मणो मिथ्यात्वापातः। अनिर्वचनीयख्यातिस्त्वग्रे वक्ष्यते। किंच वेदवाक्यस्य स्वविषये यथार्थज्ञानजनकत्वमिति सर्ववैदिकसंमतम्। तत्र वेदान्तवाक्यानामयथार्थसंशयरूपापातज्ञानजनकत्वे अप्रामाण्यापातः। किंच संशयधर्मी सामान्यतो ज्ञातो विशेषतश्च अज्ञातो वक्तव्यः। ब्रह्मणि च सामान्यविशेषभावोऽनुपपन्न इति नापातज्ञानस्य संशयत्वमिति। ततश्च किमा-

पातज्ञानमिति चेत् । संशयाविरोधी निश्चय एव । न च निश्चयस्य संशयविरोधित्वात्कथमेतादिति वाच्यम् । दोषानास्कन्दितस्यैव तस्य संशयविरोधित्वात् । अन्यथा जलमिति निश्चये सति प्रामाण्यसंशयास्कन्दितो विषयसंशयो न स्यात् मदीयमेवेदं मुखमित्यपरोक्षनिश्चये सति दर्पणे मुखमिति प्रतिबिम्बभ्रमो न स्यात् । यदि च प्रामाण्यसंशयादिना निश्चयस्य प्रतिबद्धत्वान्न संशयविरोधित्वं तदा असंभावनादिदोषप्रतिबद्धत्वान्नापातानिश्चयस्याज्ञानादिसकलप्रपञ्चविरोधित्वमिति तुल्यम् । असति प्रतिबन्धके निश्चयस्य संशयविरोधित्वात् । तस्मादापातनिश्चये सत्यपि संशयादेर्जायमानत्त्वात्तन्निरासार्थं श्रवणादौ प्रवृत्तिर्युक्तेति भावः । आपातनिश्चये हेतुमाह अधीतेति । अध्ययने प्रकारमाह विधिवदिति । विध्युक्तप्रकारेणेत्यर्थः । ब्रह्मचर्यादिः प्रकारः । उक्तप्रकारावशिष्टेन कृताध्ययनजन्यबोधो नित्यादिकर्मसूपयुज्यते न त्वन्यथेति भावः । अध्ययनं चाध्यापनविधिप्रयुक्तमिति प्राभाकराः । नेति वेदान्तिनः ।

तथा हि अध्यापनस्य हि अध्यापयीतेति विधिविधेयत्वे अध्ययनस्याध्यापनविधिप्रयुक्तता स्यात्। न चाध्यापने विधिरस्ति। 'षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका, याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रह' इत्यादिना वृत्यर्थत्वेन तस्य रागतः प्राप्तत्वात्। न च रागतः प्राप्ते विधिरस्ति। भोजनादावपि प्रसङ्गात् प्राङ्मुखोऽन्नान्यश्नीतेत्यस्यच प्राङ्मुखत्वमात्रविधायकत्वात्। न चाध्यापयीतेति प्रत्यक्षो विधिरस्तीति वाच्यम्। तत्र अधीयीतेति वचनविपरिणामात्। अन्यथा एतया ग्रामकामं याजयेदित्यत्र ग्रामकामो यजेतेति वचनविपरिणामो न स्यात्। तत्र च यदि याजनस्य वृत्यर्थत्वेन रागतः प्राप्तत्वान्न विधिरिति वचनविपरिणामाश्रयणं तदा प्रकृतेऽपि तुल्यम्। तस्माद्रागतः प्राप्तत्वान्नाध्यापने विधिरस्तीति कथमध्यापनविधिप्रयुक्तताऽध्ययनस्य। किंच यावत्स्वविधिप्रयुक्तत्वं संभवति तावत् नान्यविधिप्रयुक्तता तथा च स्वाध्यायोऽध्येतव्य इति स्वविधिप्रयुक्ततैव संभवतीति किमिति

अध्यापनविधिप्रयुक्तत्वम् । यदि चाध्ययनमन्तरेणाध्यापनमनुपपन्नमिति अध्यापनविधिप्रयुक्तताऽध्ययनस्य तर्ह्यध्यापनमन्तरेणाध्ययनानुपपत्तेरध्ययनविधिप्रयुक्ततैवाध्यापनस्य किं न स्यात् । किं च अध्यापनस्यैव विधेयत्वे अध्येतुर्नियोगाभावात्स्वयं प्रवृत्तिर्न स्यात् । न चेष्टापत्तिः ।"सत्यकामो ह वै जाबाल" इत्यादि श्रुतौ स्वयं प्रवृत्तेः श्रूयमाणत्वात् । तस्मादध्ययनं स्वविधिप्रयुक्तं न त्वध्यापनविधिप्रयुक्तमिति सूक्तम् । विस्तरस्तु विवरणादौ बोद्धव्यः । अध्ययनस्य च फलमर्थावबोधः दृष्टत्वादिति मीमांसकाः । नेति सिद्धान्तः । तथा हि स्वाध्यायोऽध्येतव्य इत्यध्ययनविधिना तावदध्ययनं विधीयते तस्य च फलाकाङ्क्षायां नार्थावबोधस्य फलत्वेन अन्वयः मानाभावात् । न च दृष्टत्वादिति वाच्यम् । अध्ययनानन्तरमर्थावबोधस्येव अवाप्तेरपि दृष्टत्वात् । न चावाप्तेरपुरुषार्थत्वान्न फलत्वमिति वाच्यम् । अर्थावबोधेऽपि तुल्यत्वात् । न चार्थावबोधे परंपरया आहवनीयादिवत् पुरुषार्थानुबन्धित्वात्फलत्वमिति वाच्यम् । अवाप्तेरपि

तुल्यत्वात् । किंच अध्ययनस्य अर्थावबोधादवाप्तिरव्यवहिता दृष्टा । स तु व्यवहितः अव्यवहितस्य च फलत्वे संभवति न व्यवहितस्य तत्कल्पनं युक्तम् । किंच कर्म्मणि तव्यप्रत्ययानुरोधेन स्वाध्यायस्य कर्मत्वं प्रतीयते तच्चोत्पत्त्यादेरभावादवाप्यत्वेनेति अवाप्तिः श्रुता नत्वर्थावबोधः श्रुतः श्रुताश्रुतयोर्मध्ये च श्रुतं बलवदिति न्यायादवाप्तेरेव फलत्वम् । किं च अध्ययनस्य अर्थावबोधार्थत्वे क्षत्रियाणां निषादेष्ट्याद्यध्ययनं न स्यात् । तत्र तेषामधिकाराभावेन कर्मोपयुक्तार्थावबोधस्य व्यर्थत्वात् । अवाप्त्यर्थत्वे तु ब्रह्मयज्ञार्थं तेषामध्ययनं युज्यते । तस्मादध्ययनस्यावाप्तिरेव फलमिति ॥

**काम्यानि स्वर्गादीष्टसाधनानि ज्योतिष्टोमादीनि । निषिद्धानि नरकाद्यनिष्टसाधनानि ब्राह्मणहननादीनि । नित्यान्यकरणे प्रत्यवायसाधनानि सन्ध्यावन्दनादीनि ।**

काम्यानीति।यद्यपि“वसन्ते वसन्ते ज्योतिषा यजेते”ति वीप्सानुरोधेन ज्योतिष्टोमस्य नित्यत्वं तथाऽपि नित्यस्य सतः काम्यस्येदमुदाहरणम्। आदि शब्देन च केवलकाम्यपुत्रकाम्येष्ट्यादीनां

संग्रहः। वर्जनं च कामनापुरस्कारेणेति ज्ञेयम्। इष्टेति। ज्योतिष्टोमेन स्वर्गकामो यजेतेति श्रुतेरित्यर्थः। अनिष्टेति। असति प्रायश्चित्त इति शेष इति केचित्। तन्न। प्रायश्चित्तदशायामपि ब्रह्महत्यादेरनिष्टसाधनत्वानपायात्। न हि साधनपदेनात्र फलोपधानं विवक्षितमस्ति मानाभावात्। एवं वर्जनीयान्युक्त्वा अनुष्ठेयान्याह नित्यानीति। ननु किं नित्यानामकरणे प्रत्यवायसाधनत्वमकरणस्य वा। नाद्यः। तदानीं नित्याभावेन कारणत्वानुपपत्तेः न हि असतः कारणत्वं संभवति। न द्वितीयः। अकरणस्याभावत्वेन सिद्धान्ते तस्य कारणत्वाभावात्। ग्रन्थविरोधाच्चेति चेत्। उच्यते नित्यानि तावत् विधिविहितानि विधिश्च भाव्यमन्तरेणानुपपन्नः किंचित् भाव्यं कल्पयति। न च विश्वजिन्न्यायेन स्वर्गो भाव्यतया कल्पयितुं युक्तः। सदा स्वर्गकामनाया अभावेन कदाचिदननुष्ठानप्रसङ्गात्। न चाकरणे प्रत्यवायप्रागभावपरिपालनं फलमिति वाच्यम्। तथा सति प्रागभाववतः कार्यस्योत्पत्तिनियमेन नित्यानुष्ठानानन्तरमपि

कदाचित्प्रत्यवायोत्पत्तिप्रसङ्गात् । अत एव दुःखप्रागभावपरिपालनं न मोक्ष इत्युक्तं न्यायग्रन्थेषु । किंच नित्यानां स्वाकरणे प्रत्यवायस्य प्रागभावपरिपालनं फलमुत अन्याकरणप्रत्यवायस्य । नाद्यः । तदानीं तादृशप्रत्यवायस्य खपुष्पतुल्यत्वेन प्रागभावानुपपत्तेः । न द्वितीयः । अन्याकरणे प्रत्यवायप्रागभावपरिपालनस्यैव तत्फलत्वेन्यकरणव्यर्थतापत्तेः । तस्मान्नाकरणे प्रत्यवायप्रागभावपरिपालनं भाव्यं किंतु ज्ञानाज्ञानकृतानां पापानां क्षय एव । तस्य सर्वदा ईप्सितत्वात् । एवंच न नित्यानामकरणे स्वतन्त्रप्रत्यवायोत्पादः । पूर्वोक्तरीत्या कारणाभावात् । किंतु न पापक्षय इति तत्र पापं तिष्ठति तस्य च पापस्य नित्यानामकरणं ज्ञापकम् । अकुर्वन् विहितं कर्मेति शतृप्रत्ययस्य लक्षणार्थत्वात् लक्षणहेत्वोः क्रियाया इति उक्तत्वात् । नचाकरणस्य ज्ञापकत्वमपि कथम् । ज्ञापकत्वं हि ज्ञानजनकत्वं, न चाभावस्य तत्संभवतीति वाच्यम् । जनकज्ञानविषयत्वस्यैव गमकत्वात् । धूमादेरपि वह्निगमकत्वं न तज्ज्ञानजनकत्वम् अती-

तादौ व्यभिचारात् किंतु तादृशज्ञानविषयत्वमेव । तथाच अकरणज्ञानस्य जनकत्वात् नाकरणस्य जनकत्वप्रसङ्गः । न-च विहितस्याननुष्ठानादिति पञ्चम्या अकरणस्य हेतुत्वं बोध्यत इति वाच्यम् । अभावस्य हेतुत्वानुपपत्त्या पञ्चम्याः ज्ञापकार्थ-त्वात् । एवंच नित्यानामकरणं प्रत्यवायज्ञापकं न तूत्पादकम् । तथाचाकरणे साधनानि ज्ञापकानीत्यर्थः । नच नित्याक-रणस्यैव प्रत्यवायज्ञापकम् न नित्यानामिति वाच्यम् । विशिष्टस्य ज्ञापकत्वे विशेषणस्यापि ज्ञापकत्वात् । अथवा यद्यपि नित्यानाम् अकरणस्य वा न प्रत्यवायहेतुत्वं तथाऽपि नित्यकाले अननुष्ठि-तक्रियाया एव स्वतन्त्रप्रत्यवायहेतुत्वम् । अकुर्वन्निति शतृप्रत्ययस्य विहितस्याननुष्ठानादितिपञ्चम्याश्च अकरणस्य नियतपूर्ववृ-त्तित्वमात्रे तात्पर्यात् । यथा तत्त्वज्ञानान्निश्रेयसाधिगम इति न्याय-सूत्रे पञ्चम्याः । मूलेऽपि नित्यानि अकरणे प्रत्यवायसाधना-नीत्यनेन नित्याकरणस्य प्रत्यवायनियतपूर्ववृत्तित्वमेवोच्यत इति सर्वमवदातम् ॥

[४—ख]

नैमित्तिकानि पुत्रजन्माद्यनुबन्धीनि जातेष्ट्यादीनि । प्रायश्चित्तानि पापक्षयसाधनानि चान्द्रायणादीनि । उपासनानि सगुणब्रह्मविषयमानसव्यापाररूपाणि शाण्डिल्यविद्यादीनि । एतेषां नित्यादीनां बुद्धिशुद्धिः परं प्रयोजनमुपासनानां तु चित्तैकाग्र्यं "तमेतमात्मानं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन" इत्यादिश्रुतेः "तपसा कल्मषं हन्ति" इत्यादिस्मृतेश्च । नित्यनैमित्तिकप्रायश्चित्तोपासनानां त्ववान्तरफलं पितृलोकसत्यलोकप्राप्तिः "कर्मणा पितृलोको विद्यया देवलोक" इत्यादिश्रुतेः ॥

नैमित्तिकानीति । तदकरणस्यापि प्रत्यवायज्ञापकत्वं तन्नियतपूर्ववृत्तित्वं वा द्रष्टव्यम् । पुत्रेति । "वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जात" इति श्रुतेरित्यर्थः । प्रायश्चित्तानीति । अत्र वदन्ति न प्रायश्चित्तानां पापक्षयः फलम् अपुरुषार्थत्वात् । पुरुषार्थो हि सुखं वा दुःखाभावो वा न च पापक्षयस्य एतदन्यतरत्वमस्ति । तस्मात्पापक्षयफलत्वे प्रायश्चित्ते प्रवृत्तिरेव न स्यात् पुरुषार्थानुबन्धाभावात् । किंच प्रायश्चित्तस्य

पापक्षयफलत्वे नित्यादेः प्रायश्चित्तस्य को विशेषः । तस्मात् दुःखप्रागभावपरिपालनमेव फलं पापक्षयस्तु द्वारमिति तन्न । तथा सति अहिकण्टकादिपरिहारे प्रवृत्तिर्न स्यात् सुखदुःखाभावान्यत्वात् । यदित्वहिकण्टकादेर्दुःखहेतुत्वेन द्वेष्यतया तन्निवृत्तौ प्रवृत्तिः तदा पापस्यापि तद्धेतुत्वात्तन्निवृत्त्यर्थं प्रायश्चित्ते प्रवृत्तिर्युक्तैव । अन्यथा सुखसाधनेपि प्रवृत्ति र्न स्यात् यदि सुखवत् सुखसाधनेपि रागात्प्रवृत्तिः तर्हि दुःखवत् तत्साधनेपि द्वेषात्तन्निवृत्त्यर्थं प्रायश्चित्तेऽपि प्रवृत्तिर्युक्तैव । नच नित्यादिना प्रायश्चित्तस्याभेदः । नियतनिमित्ते विहितं नित्त्यं यथा अहरहः सन्ध्यामुपासीतेत्यनेन सन्ध्यावन्दनम् । नैमित्तिकं चानियतनिमित्ते विहितमपि पापव्यतिरिक्ते निमित्ते विहितम् यथा पुत्रजन्मादिनिमित्तजातेष्ट्यादि । प्रायश्चित्तं तु पापनिमित्ते विहितं यथा परस्त्रीकामः प्रायश्चित्तं कुर्यादित्यादि । एवंच नैतेषामभेदः । यत्तु दुःखप्रागभावपरिपालनं फलमिति तन्न । तथासति प्रायश्चित्तानन्तरं दुःखोत्पत्तिप्रसङ्गात् । प्रागभाववतः कार्यस्यो-

त्यत्तिनियमात्। विजातीयप्रागभावकल्पने मानाभावात्। तस्मा-द्युक्तमुक्तं प्रायश्चित्तानां पापक्षयसाधनत्वम्। यच्च नाभुक्तं क्षीयते कर्मेति तत् अकृतप्रायश्चित्तप्रारब्धविषयम्। अकृत-प्रायश्चित्तस्यापि सञ्चितकर्मणः ज्ञानेन नाशात् 'ज्ञानाग्निः सर्व-कर्माणि भस्मसात्कुरुते क्षणात्' इति श्रवणादिति द्रष्टव्यम्। **सगुणेति**। निर्गुणविषयं निदिध्यासनं तु तत्वज्ञानायैव उप-युज्यत इति भावः। एतच्चोपलक्षणं सगुणब्रह्मातिरिक्तविषयका-णामपि उपासनानां दर्शनात्। **मानसव्यापारेति**। ज्ञानरूपा-णि न किन्तु मानसक्रियारूपाणीत्यर्थः। उपासनानां ज्ञानत्वे विधेयत्वानुपपत्तेः। प्रमाणवस्तुपरतन्त्रस्य ज्ञानस्य सिद्धान्ते विधेयत्वाभावात्। तदुक्तं टीकायाम् इच्छातोऽनुष्ठेय-त्वान्मानसी क्रियैषा न ज्ञानमिति। अत एव द्रष्टव्य इति दर्शनमनूद्येत्युक्तं विवरणे शाण्डिल्येन ऋषिणा उक्ता शाण्डिल्यविद्या आदि शब्देन दहरादिविद्या ग्राह्या। एवं नि-त्यादीनां स्वरूपमुक्त्वा निर्गतनिखिलकल्मषतयेत्येतद्व्याचष्टे

एतेषामिति परममिति आवश्यकमित्यर्थः न तु मुख्यमित्यर्थः। विविदिषन्तीति श्रुत्युपन्यासानुपपत्तेः तत्रहि विविदिषोद्देशेन वेदनोद्देशेन वा यज्ञादीनाँ विधेयत्वेन विविदिषादेरेव मुख्यत्वात् चित्तशुद्धेस्तु तद्द्वारत्वात् कथं नित्यादिषु चित्तशुद्धेरावश्यकत्वम् इति चेत्। शृणु। नित्यादीनां हि प्रकारत्रयेण अनुष्ठानम्। एकं वेदनोद्देशेन। अन्यत्संस्कारार्थत्वेन। अपरम् ईश्वरार्पणबुद्ध्या। तत्र यदा तावत् खादिरतावत् तत्तत्फलार्थं विहितानामपि यज्ञादीनां संयोगपृथक्त्वन्यायेन वेदनाद्युद्देशेन विहितत्वादनुष्ठानं तदातु आवश्यकी पापक्षयरूपा चित्तशुद्धिः। यावत्पापं वेदनानुत्पत्तेः। तस्याः यज्ञादिभिर्वेदनादिजनने द्वारत्वात्। एवं च वेदनाद्युद्देशेन यज्ञाद्यनुष्ठानेपि अवश्यं चित्तशुद्धिर्भवतीत्येतदभिप्रेत्याह। विविदिषन्तीति यदापि न वेदनाद्युदेशेनानुष्ठानं किंतु नित्यत्वात् तदात्वावश्यकः पापक्षयः नित्यविधीनां भाव्यान्तरभावात् श्रुतत्वाच्चेत्यभिप्रेत्याह। तपसेति। यदापि यत्करोषीत्यादिवचनादीश्वरार्पणबुद्ध्या कर्मानुष्ठानं तदातु ईश्वरप्र-

सादः फलं स च न अशुद्धचित्तानामिति चित्तशुद्धिरावश्यकी। एतदभिप्रेत्य चकारप्रयोगः। तदेवं सुष्ठूक्तं नित्यादिषु चित्तशुद्धेरावश्यकत्वम्। **उपासनानामिति** अनुगतमिति शेषः तत्तत्फलार्थं विहितेन उपासनामात्रेण चित्तैकाग्र्यजननात्। यत्तु मुख्यमिति शेषइति तन्न देवलोकाद्यर्थत्वेन विहिते कर्मणिद्वारीभूतस्य चित्तैकाग्र्यस्य मुख्यत्वाभावात् यद्धि यदुद्देशेन विहितं तत्तस्य मुख्यं फलम्। अन्यथा स्वर्गाद्युद्देशेन विहितस्य यागादेरपूर्वेण मुख्यफलत्वापत्तेः। नच चित्तैकाग्र्योद्देशेन उपासनानि विहितानि सन्ति येन तस्य मुख्यत्वं स्यात् तस्मात् उपासनानां चित्तैकाग्र्यं न मुख्यं फलं किं तु अनुगतं देवलोकादिप्राप्तिश्च मुख्या एवं नित्यनैमित्तिकयोरुपासनानांचावांतरफलमित्यत्र मुख्यफलमित्यपि द्रष्टव्यम्। विविदिषन्तीत्यत्र वेदनोद्देशेन यज्ञादीनि विधीयन्ते। वेदनस्य इच्छासम्बन्धित्वेन प्रतीयमानत्वात्। यथा अश्वेन जिगमिषतीत्यत्राश्वस्येच्छाविषयीभूतगमनार्थत्वं न तु जिगमिषार्थत्वम् अत एव सर्वापेक्षा

यज्ञादिश्रुतेरश्ववदिति सूत्रे अश्वदृष्टांतः। विविदिषोद्देशेनच यज्ञादिविधाने विविदिषायाः कामसम्बन्धकल्पनापत्तेश्च। ततश्च वेदनार्थत्वमेव यज्ञादीनाम्। एवंच यज्ञादीनां (वेदनार्थत्वे एतच्छ्रुत्युपन्यासो न युक्तः अनया विविदिषोद्देशेन यज्ञादिविधानादिति दूषणं परास्तम्। यज्ञादीनां) वेदनार्थत्वेन विधानात्। ननु न वेदनार्थत्वम् यज्ञादीनां, तथासति ज्ञानसामान्यसामग्र्यतिरिक्तयज्ञादिसाध्यत्वे वेदनस्य स्वतस्त्वव्याघातः। नच प्रमायाः सामान्यसामग्र्यतिरिक्तगुणजन्यत्वेन स्वतस्त्वव्याघात इष्ट एवेति वाच्यम् गुणजन्यत्वे मानाभावात्। नच प्रमायाः सामान्यसामग्रीजन्यत्वे भ्रमत्वापत्तिरिति वाच्यम्। दोषाभावेन तदनुपपत्तेः। भ्रमस्य दोषजन्यत्वंहि उभयवादिसिद्धम् तदभावे सति सामान्यसामग्र्यैव प्रमोत्पत्तिसंभवे अतिरिक्तगुणजन्यत्वे गौरवात्। गुणस्तु नोभयवादिसिद्धः, नच दोषाभावे सति सत्यांच ज्ञानसामान्यसामग्र्यां गुणाभावेन कार्याभावो दृश्यते नच दोषाभाव एव गुण इति वाच्यम् तददतिरिक्तगुणाङ्गी-

कारात् । तस्य गुणत्वे वा न स्वतस्त्वव्याघातः दोषाभावस्य तुच्छत्वेन सिद्धान्ते तस्य कारणत्वाभावात्, तदुपलक्षितायाः सामान्यसामग्र्याः भावरूपाया एव प्रमोत्पादकत्वाभ्युपगमात् । तस्मात्प्रमायाः ज्ञानसामान्यसामग्रीमात्रप्रयोज्यत्वं स्वतस्त्वमस्त्येव तच्च यज्ञादिजन्यत्वे विरुद्धमिति । मैवम् न हि स्वतस्त्वाङ्गीकारः कुलधर्मोपातः किंतु ज्ञानसामान्यसामग्र्यतिरिक्तगुणजन्यत्वे मानाभावापातः यज्ञादिजन्यत्वं च वचनसिद्धमिति तदङ्गीक्रियत एव । इत्थञ्च ज्ञानसामान्यसामग्रीवचनसिद्धंच यज्ञादि तदतिरक्ताजन्यत्वमेव स्वतस्त्वम् । वस्तुतस्तु यज्ञादीनां वेदनप्रतिबन्धनिवृत्तौ हेतुत्वम् । श्रवणादीनामिवासम्भावनादिनिवृत्तौ वेदनन्तु प्रतिबन्धकाभावोपलक्षितज्ञानसामान्यसामग्र्यैव जन्यत इति न तस्य स्वतस्त्वव्याघात इति साम्प्रदायिकाः । ततश्च युक्तम् वेदनोद्देशेन कर्मणामनुष्ठानम् । ननु एकोद्देशेन अनेकविधाने वाक्यभेदान्न वेदनोद्देशेन यज्ञाद्यनेकम् विधातुम् शक्यमिति चेत् तर्हि विविदिषोद्देशेनापि तद्विधानम् न स्यात् ।

दोषस्य समत्वात् । तथापि कः प्रतीकार इति चेत् । शृणु । अत्र यज्ञादिपदैर्विहितं कर्मसामान्यम् लक्ष्यते जातपुत्रः कृष्णकेशो ऽग्नीनादधीतेत्यत्र जातपुत्रकृष्णकेशपदाभ्यामिव अवस्थाविशेषाः तच्च कर्मसामान्यम् वेदनोद्देशेन विधीयत इति न वाक्यभेद इत्यस्मद्गुरवः । तस्माद्युक्तमुक्तम् वेदनोद्देशेन यज्ञादीनि विधीयन्त इति । **कर्मणेति** ननु नित्यविधिषु फलाश्रवणात् हिरण्यधारणन्यायेन एतदर्थवादसिद्धा पितृलोकप्राप्तिर्मुख्यैव फलं किं न स्यादिति चेत् । न । पितृलोकप्राप्तेः सर्वदा सर्वेषामनभीप्सितत्वेन कदाचिदननुष्ठानप्रसङ्गात् । पापक्षयस्तु सर्वदा आस्तिकानामभीप्सित इति तस्य युक्तं फलत्वं । हिरण्यधारणं तु न नित्यमिति युक्ता तस्यार्थवादिकी भ्रातृव्यदुर्वर्णता फलम् । तस्मात् पितृलोकप्राप्तिरानुषङ्गिकी ॥

[४—ग]

**साधनानि नित्यानित्यवस्तुविवेकेहामुत्रार्थफलभोगाविरागशमादिषट्कसम्पत्तिमुमुक्षुत्वानि । नित्यानित्यवस्तुविवेकस्तावद्ब्रह्मैव नित्यं वस्तु ततोऽन्यदखिलम-**

नित्यमिति विवेचनम् । ऐहिकानां स्रक्चन्दनवनितादि-विषयभोगानां कर्मजन्यतयानित्यत्ववदामुष्मिकाणामप्यमृतादिविषयभोगानामनित्यतया तेभ्यो नितरां विरतिरिहामुत्रार्थफलभोगविरागः । शमादयस्तु शमदमोपरतितितिक्षासमाधानश्रद्धाख्याः । शमस्तावच्छ्रवणादिव्यतिरिक्तविषयेभ्यो मनसो निग्रहः । दमो वाह्येन्द्रियाणां तद्व्यतिरिक्ताविषयेभ्यो निवर्त्तनम् । निवर्त्तितानामेतेषां तद्व्यतिरिक्तबिषयेभ्य उपरमणमुपरतिः। अथवा विहितानां कर्मणां विधिना परित्यागः । तितिक्षा शीतोष्णादिद्वन्द्वसहिष्णुता। निगृहीतस्य मनसः श्रवणादौ तदनुगुणविषये च समाधिः समाधानम्। गुरूपदिष्टवेदान्तवाक्येषु विश्वासः श्रद्धा । मुमुक्षुत्वं मोक्षेच्छा। एवम्भूतः प्रमाताधिकारी "शान्तो दान्त" इत्यादिश्रुतेः । उक्तं च—

"प्रशान्तचित्ताय जितेन्द्रियाय च
प्रहीणदोषाय यथोक्तकारिणे ।
गुणान्वितायानुगताय सर्वदा
प्रदेयमेतत्सततं मुमुक्षव" इति ॥

साधनचतुष्टयेत्येतद्व्याचष्टे साधनानीति अत्र विवेकादीनां

क्रमः हेतुहेतुमद्भावेन द्रष्टव्यः। ब्रह्मैवेति ननु ब्रह्मैव नित्यम् अन्यदखिलमनित्यमिति विवेचनं, निश्चयः, संशयो वा। नाद्यः। विवेककाल एव ब्रह्मणो ज्ञातत्वात्, श्रवणादिवैयर्थ्यापत्तेः। नान्त्यः तथासति विवेकस्य वैराग्यहेतुत्वं न स्यात्। न हि सन्देहमात्रेणैहिकपारलौकिकार्थविरागः सम्भवाति एतेन आपातज्ञानमेतदिति परास्तम्। आपातज्ञानेन विरागासम्भवादिति चेत्। सत्यमिदं सर्वमनित्यं कृतकत्वादिहेतुभ्यः एतस्य अधिष्ठानम् किंचिन्नित्यम् निरधिष्ठानस्यानित्यस्यासम्भवादित्यालोचनात्मकप्रत्ययविशेषस्य विवेकत्वेन विवक्षितत्वात्। एतत्प्रत्ययात्मकविवेकानन्तरंचकृतकत्वादिहेतुभ्य ऐहिकामुष्मिकेभ्यो विरागः सम्भवत्येव। तदुक्तं वाचस्पतिमिश्रैः माभूदिदं नित्यमिदमनित्यमिति धर्मिविशेषयोर्विवेकः धर्मिमात्रयोर्नित्यानित्ययोर्विवेकं निश्चिनोत्येवेति। एवंच ब्रह्मैव वस्तुतो विषयो यस्य एतादृशं यत् अस्ति किंचिन्नित्यमिति अन्यदखिलमनित्यमिति विवेचनं स विवेक इति योजना मूले

द्रष्टव्या । अनित्यतथेति तद्यथेह कर्मजितो लोकः क्षीयते एव मेवामुत्र पुण्यजितो लोकः क्षीयत इत्यादिवचनादिति भावः। तेभ्यो नितरां विरतिरिति। तदिच्छाविरोधि चेतोवृत्तिविशेष इत्यर्थः। नतु तदिच्छाविरहः। अभावस्य विधेयत्वाभावात्। विरागस्यच ब्राह्मणो निर्वेदमायादित्यनेन विहितत्वात्। विरहश्च यदि प्रागभावात्यन्ताभावान्योन्याभावाः। तदा तेषामनादित्वेनाननुष्ठेयत्वाद्विधेयत्वाभावः। अथ प्रध्वंसः तर्हि कृतकस्य प्रध्वंसोऽयत्नसिद्ध इति विरागस्य विवेकसापेक्षत्वं न स्यात्। विधिवैयर्थ्यापाताच्च। सिद्धान्ते अत्यन्ताभावातिरिक्तप्रध्वंसस्य मानाभावेनानङ्गीकाराच्च। प्रध्वस्तो घट इति प्रतीतेश्च, घटविरुद्धकपालमालाविषयत्वात्। तदुक्तं तातचरणैः ऐहिकपारलौकिकफलेच्छाविरोधि चेतोवृत्तिविशेषात्मको विराग इति। तद्यतिरिक्तेति श्रवणादिव्यतिरिक्तेत्यर्थः। ननु इन्द्रियनिग्रहे तेषां विषयेभ्यो निवर्त्तनमर्थसिद्धमित्यस्वरसादाह। अथवेति सन्यास इत्यर्थः। विहितानामिति श्रवणाद्यतिरिक्तानामितिशेषः विधिनेति

आलस्यादिना कर्मत्यागस्य विरहाद्वा एष देवानां योग्निमुद्वासयत इत्यादिना निषिद्धत्वादिति भावः। तदनुगुणेति गुरुशुश्रूषादावित्यर्थः। एवंभूतेति। एवंच गृहस्थस्य न श्रवणे अधिकारः। अधिकारिविशेषणस्य सन्यासस्य अभावात्। नच सन्यासस्याधिकारिविशेषणत्वे मानाभावः विवेकादिवत् पुरुषविशेषणत्वेन शान्त्यादि वाक्ये श्रुतत्वात्। नच जन्मान्तरीयः सन्यासो ऽस्तीति वाच्यम्। तस्यानिश्चयात्, अनिश्चितस्य वाधिकारिविशेषणत्वाभावात्। वेदान् इमंलोकम् अमुंच परित्यज्यात्मानमन्विच्छेदित्यादिविधिविरोधाच्च। गृहस्थस्य कर्मव्यग्रतया श्रवणकर्त्तव्यतानुपपत्तेश्च। पुराणादौ गृहस्थस्य विचारश्रवणं तुदेवादीनां यागादिश्रवणवन्नेयं, तस्मात्सन्यासिन एव श्रवणे ऽधिकार इति। शान्तेति ननु किमस्मिन्वाक्ये विधीयते न तावत्पश्येदिति प्रकृत्युपात्तं ज्ञानं तस्य फलत्वेन विधेयत्वाभावात् नापि शान्त्यादिविधानं वाक्यभेदप्रसङ्गादिति चेत्। अत्र वदन्ति शान्त्यादिना श्रवणेन सह अव्यभिचरितसम्बन्धात्। शान्त्या-

दिपदैर्विचारो लक्ष्यते उपरतिशब्दाभिधेयश्च सन्यासः, अनयोः समुच्चयो ऽस्मिन्वाक्ये विधीयत इति। गुरवस्तु नास्मिन्वाक्ये शान्त्यादिपदैर्विचारो लक्ष्यते अनेकेषु पदेषु लक्षणाप्रसङ्गात्। नचैकस्मिन्पदे लक्षणयोपपत्तौ अनेकेषु सा युक्ता। किन्तु पश्येदिति प्रकृत्या विचारो लक्ष्यते, इत्थञ्चास्मिन्वाक्ये शान्त्यादिमत्कर्तृको विचारो विधीयते। नच श्रोतव्य इति विधिना विचारस्य प्राप्तत्वात् पुनर्विधानम् व्यर्थमिति वाच्यम्। शारीरकब्राह्मणे एतदतिरिक्तविचारविधायकाभावात् यत्तु समुच्चयो विधीयत इति तन्न। स हि यदि सन्यासविचारात्मकः तदोभयविधाने वाक्यभेदः, तदतिरिक्ते तु मानाभावः। किंच उपरतिपदेन शान्त्यादिपदैश्च शक्त्या लक्षणया च सन्यासविचारोपस्थितावपि समुच्चयप्रतिपादकपदाभावेन कथमत्र तस्य विधानं। समुच्चयप्रतिपादकं पदमध्याहार्यमिति चेत् न। अध्याहारे मानाभावात् शान्त्यादीनामेव समुच्चयविधानोपपत्तौ श्रवणलक्षणावैयर्थ्यापाताच्च। सोमविशिष्टयागविधाने सोमस्य यागार्थत्व-

वत् विचारसन्यासयोरतिरिक्तसमुच्चयस्य विधाने विचारस्य समुच्चयार्थत्वापाताच्च। तथाच ज्ञानार्थत्वं न स्यात् तस्मात्प्रकृत्या विचारम् लक्षयित्वा शान्त्यादि मत्कर्तृको विचारो विधीयत इत्येव युक्तम्। दोषा रागादयः ते प्रहीणा क्षीणा यस्य तस्मै अनेन चोपरतिरुक्ता गुणाः अमानित्वादयः सर्वदा अनुगताय गुरूसेवापराय ॥

[४—घ]

**विषयो जीवब्रह्मैक्यं शुद्धचैतन्यं प्रमेयं तत्रैव वेदान्तानां तात्पर्यात् । सम्बन्धस्तु तदैक्यप्रमेयस्य तत्प्रतिपादकोपनिषत्प्रमाणस्य च बोध्यबोधकभावः । प्रयोजनं तु तदैक्यप्रमेयगताज्ञाननिवृत्तिः स्वस्वरूपानन्दावाप्तिश्च "तरति शोकमात्मवित्" इत्यादिश्रुतेः "ब्रह्मविद्ब्रह्मैव भवति" इत्यादिश्रुतेश्च ॥**

एवमधिकारिणं निरुप्य विषयं दर्शयति **विषयइति**। उच्यत इति शेषः । ऐक्यस्य भेदाभेदत्वं व्यावर्त्तयति शुद्धमिति बोध्योति। ननु यतो वाचो निवर्तन्त इत्यादि श्रुति-

विरोधान्न चैतन्यस्य बोध्यत्वमिति चेत् । न । वक्ष्यमाणोत्तरत्वात् । तदैक्योति । तच्च तदैक्यंच तदैक्यं तदेव प्रमेयं तद्गतं तद्विषयं यत् अज्ञानं तस्य निवृत्तिरिति विग्रहः चिन्मात्रविषया ज्ञाननिवृत्तिः प्रयोजनमित्यर्थः । ननु नाज्ञाननिवृत्तिः सती, अद्वैतव्याघातात् । नासती, ज्ञानजन्यत्वानुपपत्तेः । न सदसती, विरोधात् । नानिर्वचनीया, अनिर्वचनीयस्य अनित्यत्वनियमेन विचारप्रयोजनस्यनित्यत्वापत्तेः । न चेष्टापत्तिः, तथा सति अनित्यफलेभ्यः कर्मभ्यो विरागादत्र प्रवृत्ति र्न स्यात् नापि पञ्चमप्रकारा तस्य चिद्रूपत्वे ज्ञानसाध्यत्वानुपपत्तेः । चिद्भिन्नत्वे ऽद्वैतविरोध इति चेत् । मैवम् । अज्ञानं हि अनिर्वचनियम् अनिर्वचनीयस्यच न ध्वंसोस्ति, मानाभावात् । सिद्धान्ते कपालमालावत् विरुद्धकार्योदय एव ध्वंसः । न च शुक्तिकादौ बाधदशायां रजतादिविरुद्धस्य कस्यचिदुत्पत्तिरस्ति, शुक्तित्वादेर्भ्रमात् प्रागपि सत्वात् । तस्मान्नानिर्वचनीयस्य ध्वंसः किन्तु स्वाश्रये ऽत्यन्ताभावः । तत्र व्यवहारतः रजतादेरधिष्ठानव्यतिरिक्तात्यन्ताभावस्वींकारेपि न

चैतन्यातिरिक्तो ऽविद्यात्यन्ताभावः अपि तु चिद्रूप एव अन्यथा अद्वैतव्याकोपः इत्थञ्च चिद्रूपैव अविद्यानिवृत्तिः। न चैवम् अविद्यानिवृत्तेर्नित्यत्वेन तत्वज्ञानवैयर्थ्यं, तत्वज्ञानेन अविद्यात्यन्ताभावबोधस्य जननात् नासीत् नास्ति न भविष्यतीति शुक्तित्वबोधेनेव रजतान्त्यताभावबोधस्य। ननु यदि अविद्यानिवृत्तिः चिद्रूपा तत्वज्ञानेन च अविद्यात्यन्ताभावबोधमात्रं जन्यते तदा श्रवणादीनां निष्प्रयोजनत्वापत्तिः चिद्रूपाविद्यानिवृत्तेर्नित्यत्वेनाप्रयोजनत्वात् अत्यन्ताभावबोधस्य च सुखदुःखाभावान्यत्वेन अपुरुषार्थत्वादिति। तत्राह **स्वरूपानन्दावाप्तिश्चेति**। चः शङ्कानिरासार्थः। अयं भावः यद्यपि सुखदुःखाभावत्वेन नाविद्यात्यन्ताभावबोधः प्रयोजनं तथापि चिद्रूपाविद्यानिवृत्तिरेव प्रयोजनं चैतन्यस्यानन्दरूपत्वेन अभिलषितत्वात्। अभिलषितं हि प्रयोजनं न तु कृतिसाध्यत्वविशेषितं, गौरवात्। तत्र चैतन्यस्य कृतिसाध्यत्वाभावेपि अभिलषितत्वेन प्रयोजनत्वमस्त्येव। न च श्रवणात्प्रागपि चैतन्यरूपप्रयोजनस्य सत्वेन तत्र प्रवृत्ति-

र्न स्यादिति वाच्यम् । प्राक्चैतन्यसत्वेपि अनवाप्तत्वभ्रमेण कण्ठगतचामीकरन्यायेन श्रवणादौ प्रवृत्त्युपपत्तेः । अनवाप्तत्वभ्रमश्च अज्ञानजन्य एव। अतः श्रवणादिजन्यतत्वज्ञानेन अविद्यात्यन्ताभावे बोधिते अनवाप्तत्वभ्रमः गच्छति ततः शुद्धचैतन्यमवशिष्यते तदेव प्रयोजनं तस्यानन्दरूपत्वेन अभिलषितत्वादिति दिक्। शोकं शोकोपलक्षितं संसारम् ॥

[ ५ ]

अयमधिकारी जननमरणादिसंसारानलसन्तप्तोऽतिदीप्तशिरा जलराशिमिवोपहारपाणिः श्रोत्रियं ब्रह्मनिष्ठं गुरुमुपसृत्य तमनुसरति "समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" इत्यादिश्रुतेः। स परमकृपयाध्यारोपापवादन्यायेनैनमुपदिशति "तस्मै स विद्वानुपसन्नाय प्राह" इत्यादिश्रुतेः ॥

एवमनुबन्धचतुष्टयं निरूप्य प्रकृतमाह अयमिति। उपहारात। रिक्तपाणिर्न पश्येत राजानं देवतां गुरुमिति वचनादिति भावः। उपसृत्येति गुरुसमीपम् गत्वेत्यर्थः ॥

[ ६ ]

असर्पभूते रज्जौ सर्पारोपवद्वस्तुन्यवस्त्वारोपोऽध्यारोपः। वस्तु सच्चिदानन्दानन्ताद्वयं ब्रह्म। अज्ञानादिसकलजड़समूहोऽवस्तु। अज्ञानं तु सदसद्भ्यामनिर्वचनीयं त्रिगुणात्मकं ज्ञानविरोधि भावरूपं यत्किञ्चिदिति वदन्त्यहमज्ञ इत्याद्यनुभवात् "देवात्मशक्तिं स्वगुणैर्निगूढाम्" इत्यादिश्रुतेश्च ॥

अपवादस्याध्यारोपपूर्वकत्वात् प्रथममध्यारोपं निरूपयाति वस्तुनीति। दृष्टान्तमाह असर्पेति। सर्पारोपवदिति। अनिर्वचनीयसर्पारोपवादित्यर्थः देशान्तरीयसर्पभाने मानाभावात्। तथा हि सति दोषविशेषे रज्ज्वां सर्पो भासत इत्यनुभवसिद्धं दोषे चापगते नास्ति सर्पः मिथ्यैव अभावादित्यपि अनुभूयते। अत्र प्रतिपन्नस्य देशान्तरसत्वन्तु न भ्रमेण वा बाधेन वा विषयीक्रियते। बाधान्यथानुपपत्त्यैव देशान्तरसत्वं कल्प्यत इति चेत् तर्हि बाधान्यथानुपपत्त्या अत्र प्रतिपन्नस्यैव बाधयोग्यम् सत्वं कल्प्यतां अनुभवारूढत्वात्। न तु देशान्तरसत्वम् अनुभवानारूढम्। न च बाधयोग्ये सत्वे कल्प्यमाने स्वा-

श्रयनिष्ठात्यन्ताभावप्रतियोगित्वमक्लृप्तं कल्पनीयमिति वाच्यम्। तथा सति संयोगादेरपि तन्न स्यात् तदतिरिक्तस्थले अवच्छेदकभेदेन स्वाश्रयनिष्ठात्यन्ताभावप्रतियोगित्वस्यादृष्टत्वात्। तत्रादर्शनेपि संयोगादौ दर्शनात्स्वीक्रियत इति यदि तदा प्रकृतेपि बाधेन स्वाश्रयनिष्ठात्यन्ताभावप्रतियोगित्वं विषयीक्रियत इति न दोषः देशान्तरसत्वन्तु न भ्रमबाधविषय इत्युक्तम्। किंच पुरोवर्त्तिनि मिथ्यासर्पं आवश्यकः अवच्छेदकलाघवस्य विद्यमानत्वात्। परैर्हि विषयसांधकतावच्छेदकं प्रमानुभवत्वमुच्यते। तच्चानुभवत्वापेक्षया गुरुभूतम्। अतः अनुभव एव विषयसाधकः। स च प्रकृतेप्यस्तीति आवश्यको मिथ्यासर्पः। ननु अनिर्वचनीयसर्पाङ्गीकारे रज्जौ कालत्रये सर्पो नास्तीति त्रैकालिकनिषेधप्रतीत्यनुपपत्तिः, सर्पाङ्गीकारादिति चेत्। अत्र समाधानमुक्तं विवरणाचार्यैः लौकिकपरमार्थदृष्टरजतप्रतियोगिकाभावविषयत्वाद्रजते त्रैकाल्याभावज्ञानस्येति। तथा च कालत्रये रजतं नास्तीति प्रतीतिः लौकिकपरमार्थदृष्टं रजतं नास्तीति

प्रतीतिर्लौकिकपरमार्थदृष्टरजतप्रतियोगिकाभावविषयिणी तस्य कदापि पुरोवर्त्तिनि असत्वात् । ननु लौकिकपरमार्थदृष्टं रजतं पुरोवर्त्तिनि प्रसक्तं न वा । आद्ये अन्यथाख्यातिः । अन्त्ये निषेधानुपपत्तिः । प्रसक्तस्यैव निषेध्यत्वादिति चेत् । अत्र वदन्ति लौकिकपरमार्थत्वेन प्रतिभासमानरजताभाव एव विषयः व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्य प्रतियोग्यधिकरणेपि स्वीक्रियमाणत्वात् । यथा शृङ्गवत्यां गवि शशीयत्वावच्छिन्नशृङ्गाभाव इति । तत्रेदं चिन्त्यं न तावत्सिद्धान्ते व्यधिकरणधर्मावच्छिन्नाभावः प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिसत्वापेक्षया प्रतियोगिसत्वस्य लघुत्वेनाभावसत्वे तस्यैव विरोधित्वान्न प्रतियोगिमति तदभाव इत्यादि दूषणगणग्रस्तस्याङ्गीकरणे प्रमाणाभावात् । न च तादृशग्रन्थोस्ति येन दूषणग्रस्तोपि स्वीकार्यः । न च परमताभिप्रायेणायं ग्रन्थ इति वाच्यम् । स्वमतेनैव उपपत्तौ परमताभिप्रायेण नयनस्य शिष्यवन्धनत्वात् । किं च कालत्रये सर्पो नास्तीति प्रतीति र्न व्यधिकरणधर्मावछिन्नाभा-

वविषयिणी। यत्प्रकारकं प्रतियोगिज्ञानमभावज्ञाने कारणं तत्प्रकारेण प्रतियोग्यवगाह्यभावज्ञानमिति नियमः सर्वसिद्धः। न हि अत्र कालत्रये सर्पो नास्तीत्यत्र लौकिकपरमार्थत्वेन सर्पो भासते अनुभवविरोधात्। अपि च अभावज्ञाने प्रतियोगितावच्छेदकप्रकारकं प्रतियोगिज्ञानं कारणम्। अन्यथा निर्विकल्पकादपि अभावधीः स्यादिति सर्वसिद्धम्। न च प्रतिभासमानरजतविशेष्यकं लौकिकपरमार्थत्वप्रकारकं च ज्ञानं सम्भवति। तद्धि लौकिकपरमार्थत्वं देशान्तरीयम् इह प्रकारीभूय भासते उत अधिष्ठानसत्वप्रयुक्तम् अत्रत्यमेव। नाद्यः। अन्यथाख्यात्यापत्तेः। अन्त्येन व्यधिकरणधर्मावच्छिन्नाभावत्वम्। अधिष्ठानसत्वप्रयुक्तस्य लौकिकपरमार्थत्वस्य प्रतिभासमानरजतनिष्ठत्वेन प्रतियोगितासमानाधिकरणत्वात्, प्रतियोगिताव्यधिकरणस्य च यत्र प्रतियोगितावच्छेदकत्वं सऽव्यधिकरणधर्मावच्छिन्नाभावः। तस्मात्कालत्रयेऽपि सर्पो नास्तीति प्रतीतेः न व्यधिकरणधर्मावच्छिन्नाभावविषयत्वमिति। अन्ये तु त्रैकालिकनिषेधस्य प्रतिभासमानरजता-

भाव एव विषयः। न च पुरोवर्त्तिनि सर्पाङ्गीकारात् कथं त्रैकालिकनिषेधप्रतीतिरिति वाच्यम्। सर्पस्यानिर्वचनीयत्वात्। अयमेव चार्थो लौकिकपरमार्थदृष्टेत्याचार्यग्रन्थस्येति वदन्ति। अत्र च लौकिकपरमार्थेत्यादेर्न किंचित्कृत्यमिति दूषणं बोध्यम्। कस्तर्हि एतद्ग्रन्थाभिप्रायेण प्रतीतिविषय इति चेत्। शृणु। लौकिकपरमार्थदृष्टापणस्थरजताभाव एव तस्य पुरोवर्त्तिनि अप्रसक्तत्वेन कथं निषेध इति चेत्। का ते अप्रसक्तिः तां न विद्मः स्मरणाभाव एवेति चेत्। त्वया तदभावः कथमत्रावधारितः। ननु आरोपाभाव एवाप्रसक्तिः। पुरोवर्त्तिनि आपणस्थरजतस्य आरोपासम्भवात्। अन्यथा अन्यथाख्यात्यापत्तेरिति चेत्। अत्र समाधानमुक्तं तत्वदीपनाचार्यैः रजताभासप्रसक्तया परमार्थरजतस्यापि बुद्धिस्थत्वादत्र निषेधः। सामान्योपाधौ प्रसक्तस्य घटस्य निषेधवदिति। अयमाशयः अभावज्ञाने प्रतियोगिस्मरणं कारणं न तु प्रतियोग्यारोपः। तस्य कारणत्वे प्रमाणाभावात्। ननु यदि न आरोपः कारणं तदा घटात्यन्ताभावबोधसमये अन्योन्या-

भावो ऽपि भासेत । प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानादिसामग्र्यास्तुल्यत्वात् । आरोपस्य तु हेतुत्वे अत्यन्ताभावबोधसमये न अन्योन्याभावभानम् । अन्योन्याभावज्ञानजनकीभूते तादात्म्यारोपाभावादिति चेत् । मैवम् । तथापि तव मते संसर्गारोपसमये कथं न तादात्म्यारोपः । तज्जनकीभूतेच्छाभावादिति चेत् । कस्मात्तज्जनकीभूतेच्छाभावः । दैववशादिति चेत् । तद्धेतोरेवास्तु किं तेनेति न्यायेन । तस्मादेव दैववशात्कदाचिदत्यन्ताभावबोधः कदाचिदन्योन्याभावबोध इत्युपपत्तौ व्यसनितया आरोपेच्छाङ्गीकरणे प्रमाणाभावात् । यथा हि तुरगादौ वेगेन गच्छतः सर्ववृक्षेन्द्रियसन्निकर्षेपि कदाचित्कस्यचित् ज्ञानं कदाचित् कस्यचित् । किं च यथा परमते घटघटत्वविषयकनिर्विकल्पकाविशेषेपि कदाचित् घटविशेष्यकं घटत्वविशेषणकं कदाचित्तु विपरीतं । न तु तत्रापि सामग्र्यन्तरं मानाभावात् । किन्तु दैवादेव तेनैवात्राप्युपपत्तौ किमन्तर्गडुनारोपेण । तथा च रजताभासप्रसक्तया स्मर्यमाणरजताभावस्य त्रैकालिकनिषेधप्रतीतिविष-

यत्वम् । आरोपश्च न कारणम् । भवतु वः आरोपः कारणम् । तथापि नानुपपत्तिः । तस्य हि न समानप्रकारकसमानविशेष्यकारोपत्वेन कारणता । किन्तु समानप्रकारकारोपत्वेनैव लाघवात् पुरोवर्तिनि च रजतस्य रजतत्वेन ज्ञानादारोपो ऽस्त्येव । तस्मात् लौकिकपरमार्थदृष्टापणस्थरजताभाव एव त्रैकालिकनिषेधविषयः । ननु शुक्तौ त्रैकालिकरजताभावप्रत्यक्षवत् नेह नानेतिशास्त्रादनिर्वचनीयसकलप्रपञ्चाभावः चैतन्ये अवगम्यते तत्र का गतिरिति चेत् । अत एव प्रपञ्चस्य अनिर्वचनीयत्वम् । प्रपञ्चस्तु दृश्यते । श्रुतौ च त्रैकालिकनिषेधो ऽवगम्यते । तेन अनिर्वचनीयत्वम् । अनिर्वचनीयस्य च स्वाभावसामानाधिकरण्यं न विरुद्धम् । अतो नेह नानास्ति किञ्च नेतिशास्त्रादवगम्यमानः चैतन्ये त्रैकालिकः प्रपञ्चाभावो न विरुद्ध इति सिद्धम् । नन्वेवं पुरोवर्तिनि रजताभावोपि प्रपञ्चाभाववत् त्रैकालिकनिषेधविषयोस्तु, तस्यापि अनिर्वचनीयत्वादिति चेत् । सत्यं, तस्यैव अभावः नि-

पा० — १ समानप्रकारकप्रतियोग्यारोप्यत्वेन ।

बेधविषयः सम्भवति। विवरणाचार्यैरपि प्रतिपन्नोपाधौ निषिध्य-
मानविषयत्वम् मिथ्यात्वम् इत्यादिग्रन्थे इदमुक्तम्। लौकिकपरमा-
र्थदृष्टरजताभावविषयत्वं तु प्रौढ्या उक्तमित्यस्मद्गुरवः। तस्मान्नानि-
र्वचनीयरजतनिषेधप्रतीत्यनुपपत्तिः। ततश्च युक्तमुक्तमनिर्वचनी-
यसर्पारोपवदिति। दार्ष्टान्तिकमाह वस्त्विति। सदिति। श्रुतितः
युक्तितश्च बाधानुपलम्भादिति भावः। असदेवेदमग्र आसीदिति
श्रुतेश्चानभिव्यक्तनामरूपविषयत्वात्। अन्यथा सदेव सोम्येदमग्र
आसीत् सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिश्रुतिव्याकोपः स्यात्। चिदिति।
विज्ञानमानन्दं ब्रह्मेत्यादिश्रुतेः। न चात्मनः ज्ञानरूपत्वे अहं ज्ञान-
वानिति प्रत्ययः कथमिति वाच्यम्। वृत्तिविषयत्वेन तदुपपत्तेः।
आनन्देति। उक्तश्रुतेः परमप्रेमास्पदत्वाच्च हैरण्यगर्भभोगविर-
क्तानामपि अभिलषितत्वाच्च। अद्वयमिति। एकमेवाद्वितीयमिति
श्रुतेः। भेदे मानाभावाच्च। एकस्मिन् शरीरे हस्तपादाद्युपाधिवशेन
सुखदुःखवैचित्र्यवत्। शरीरभेदेपि सुखदुःखवैचित्र्यस्य औपा-
धिकत्वात्। अवस्त्विति। अनिर्वचनीयमित्यर्थः। सदसद्भिन्नत्वम-

निर्वचनीयत्वं तच्च प्रपञ्चे आवश्यकम्। तथा हि प्रपञ्चस्तावन्ना-सत्। अपरोक्षप्रथानुपपत्तेः। नापि सत्। बाध्यत्वानुपपत्तेः। दृश्यते च प्रपञ्चस्य नेह नानेत्यादिशास्त्राद्बाधः,सत्त्वे आत्मवज्जन्यत्वानु-पपत्तेश्च। नचानिर्वचनीयत्वे प्रपञ्चस्य स्वात्यन्ताभावसामानाधि-करण्यं वक्तव्यम्। तच्च विरुद्धमिति वाच्यम्। तथा सति प्रागभाव-सामानाधिकरण्यमपि न स्यात्। अनुभवात्तत्स्वीक्रियत इति चेत्तर्हि। नेह नानेत्यादिश्रुत्यात्यन्ताभावसामानाधिकरण्यमपि अनुभूयत इति। तन्न विरुद्धम्। किंच प्रपञ्चसत्ववादिनापि प्राग-भावप्रध्वंसान्योन्याभावसामानाधिकरण्यं घटस्य मृत्पिण्डे स्वी-क्रियते। एवं चात्यन्ताभावस्यापि घटसामानाधिकरण्यं वाच्यम् घटाभावत्वात् प्रागभाववत्। किं च मृत्पिण्डघटप्रागभावयोराश्र-याश्रयीभाव इत्यत्र तावन्न विवादः। तत्र प्रागभावस्याश्रयिता न प्रागभावत्वेन गौरवात्। किन्तु घटाभावत्वेन लाघवात् प्र-ध्वंसादौ अनुगतत्वाच्च। तथा च मृत्पिण्डघटात्यन्ताभावयोरपि आश्रयाश्रयीभाव आवश्यकः। अपि च घटस्य प्रागभावसामा-

नाधिकरण्यं वदता अत्यन्ताभावसामानाधिकरण्यं उक्तमेव। अत्यन्ताभावातिरिक्तप्रागभावे मानाभावात्। प्राक्कालावच्छिन्नस्यैवात्यन्ताभावस्य प्रागभावत्वात्। इदानीं घटो नास्ति किन्तु भविष्यतीति प्रतीत्यापि स एव विषयीक्रियत इति। तस्मादत्यन्ताभावसामानाधिकरण्यं न विरुद्धम्। ततश्च युक्तं प्रपञ्चस्यानिर्वचनीयत्वम्। अज्ञानं निरूपयति अज्ञानंत्विति। सत्वे बाधो न स्यात् असत्वे अपरोक्षप्रथा न स्यात् अतो अनिर्वचनीयमित्यर्थः। त्रिगुणात्मकं सत्वरजस्तमोलक्षणगुणत्रयाश्रय इत्यर्थः। यत्किंचिदिति। अत्र यत्किंचिच्छब्देन नानिर्वचनीयत्वमुच्यते। तस्यानिर्वचनीयशब्देनैव उक्तत्वात्। नापि ज्ञानविरोधित्वम्। तस्यापि ज्ञानविरोधिशब्देन उक्तत्वात्। नापि मिथ्यात्वं। तस्य पूर्वफक्किकायामुक्तत्वात्। किन्तु भ्रमोपादानत्वम् एतच्चाज्ञानलक्षणम्। भ्रमोपादानत्वं च भ्रमाकारेण विवर्त्तमानत्वम्। तेन विवर्त्तमानाविद्याधिष्ठानत्वरूपभ्रमोपादानत्ववति ईश्वरे नातिव्याप्तिः। अज्ञानस्य भावत्वे प्रमाणमाह अहमज्ञ

इति। अयंभाव: अहमज्ञो मामन्यं च न जानामि त्वदुक्तमर्थं न जानामि शास्त्रार्थं न जानामीत्यनुगतः प्रत्ययो दृश्यते। सत्वनुगतविषयमन्तरेण अनुपपन्न इति अनुगतो विषयो वक्तव्यः। स न ज्ञानसामान्याभावः। तस्यात्मन्यसम्भवात्। नापि विशेषाभावस्तेषामननुगतत्वात्। तस्मादनुगतप्रत्ययान्यथानुपपत्त्या भावरूपमज्ञानं स्वीकर्त्तव्यं सत्तावत्। यथा हि घटः सन् पटः सन् इत्यनुगतप्रत्ययान्यथानुपपत्त्या सत्तासामान्यं परैः स्वीक्रियते तद्वत्। अपि च पूर्वोक्तयुक्तया अनिर्वचनीयं तावद्जगतं स्वीकार्यम्। तस्य चावश्यम् उपादानं वक्तव्यम्। निरुपादानस्य भावकार्यस्यासंभवात्। तच्चान्वयव्यतिरेकाभ्यामज्ञानमेव। तदपि यदि अभावरूपं तदा नोपादानत्वयोग्यमिति भावरूपमेव स्वीकार्यम्। अभावत्वात् भावत्वस्य लघुत्वाच्च। तस्माद्भावरूपमेव अज्ञानं स्वीकार्यमिति। देवेति। देवस्य ईश्वरस्य आत्मशक्तिम् आत्मनः कारणत्वनिर्वाहिकामित्यर्थः। स्वगुणैः सत्वरजस्तमोभिः। एवं च भावरूपमज्ञानं स्वीकर्त्तव्यम्। विशेषादर्शनस्य गुणाश्रयत्वानुपपत्ते-

रिति भावः। ननु किमज्ञानमनेकम् उत एकम्। नाद्यः। अजामेका-मिति श्रुतिविरोधात्। नान्त्यः। इन्द्रो मायाभिरिति श्रुतिविरोधापत्तेः ॥

[७—क]

इदमज्ञानं समष्टिव्यष्ट्यभिप्रायेणैकमनेकमिति च व्यवह्रियते । तथा हि यथा वृक्षाणां समष्ट्यभिप्रायेण वनमित्येकत्वव्यपदेशो यथा वा जलानां समष्ट्यभिप्रायेण जलाशय इति तथा नानात्वेन प्रतिभासमानानां जीवगताज्ञानानां समष्ट्यभिप्रायेण तदेकत्वव्यपदेशो "ऽजामेकाम्" इत्यादिश्रुतेः ॥

तत्राह इदमज्ञानमिति। व्यष्ट्यभिप्रायेण अनेकमिति व्यवह्रियते, समष्ट्यभिप्रायेण एकमिति व्यवह्रियते इति योजना। एकपदस्य समष्टिपदेन व्यवधानात्। अज्ञानानि अनेकान्येव। श्रुतावेकत्वव्यपदेशस्तु समष्ट्यभिप्रायेण अज्ञानसमुदायाभिप्रायेणेत्यर्थः जात्यभिप्रायेण एकत्वव्यपदेश इत्यप्याहुः। अथाज्ञानं लाघवादेकमेव किं न स्यादत आह नानात्वेनेति। नानात्वेन

प्रतिभासमानेति जीवविशेषणं साभिप्रायम्। अयमभिप्रायः जीवभेदस्तावदावश्यकः बद्धमुक्तप्रतिभासात्, बद्धास्तावदस्मदादयः प्रतीयन्ते मुक्ता अपि शुको मुक्तो वामदेवो मुक्त इत्यादि शास्त्रे प्रतीयन्ते। नचैतस्य शास्त्रस्य मुख्ये अर्थे सम्भवति औपचारिकत्वं न्याय्यम्। न चैकस्य जीवस्य बद्धत्वं मुक्तत्वं च सम्भवति। अतो जीवभेद आवश्यकः। किं च क्रममुक्तिफलानि उपासनानि श्रूयन्ते श्रूयते च न तस्य प्राणा उत्क्रामन्तीत्यादिशास्त्रादिहैव मुक्तिः। एतदुभयं जीवभेदे उपपन्नं भवति। कस्यचित् जीवस्य उपासनाविशेषेण क्रममुक्तिः अन्यस्य जीवस्य श्रवणाद्यभ्यासपरिपाकवशेन उत्पन्नतत्वज्ञानस्य इहैव मुक्तिरिति। जीवैक्ये तु एतदनुपपन्नं भवतीति जीवभेद आवश्यकः। जीवभेदे अज्ञानभेदोपि वक्तव्यः। अन्यथा कस्यचित् जीवस्य तत्वज्ञानेन अज्ञाने निवृत्ते जीवान्तरस्य सम्बन्धानुपपत्तेः। तत्वज्ञानेन अज्ञाननिवृत्तौ तत्वज्ञानिनोपि मोक्षो न स्यात् अज्ञानसत्वात्। तस्मादज्ञानभेदो वक्तव्यः। अजामेकामिति श्रुतौ तु एकत्वव्यपदेशः

समष्ट्यभिप्रायेण जात्यभिप्रायेण वेत्युक्तं श्रुतावजाशब्देनाना-दिसिद्धा अविद्या उच्यते। लोहितशुक्लकृष्णपदैश्च रजः सत्व-तमांस्युच्यन्ते। सरूपां स्वसदृशीं अनिर्वचनीयामित्यर्थः ॥

[७—ख]

इयं समष्टिरुत्कृष्टोपाधितया विशुद्धसत्त्वप्रधाना। एतदुपहितं चैतन्यं सर्वज्ञत्वसर्वेश्वरत्वसर्वनियन्तृत्वादिगुणकमव्यक्तमन्तर्यामी जगत्कारणमीश्वर इति च व्यपदिश्यते सकलाज्ञानावभासकत्वात्। "यः सर्वज्ञः सर्ववित्" इतिश्रुतेः। ईश्वरस्येयं समष्टिरखिलकारणत्वात्कारणशरीरमानन्दप्रचुरत्वात्कोशवदाच्छादकत्वाच्चानन्दमयकोशः सर्वोपरमत्वात्सुषुप्तिरत एव स्थूलसूक्ष्मप्रपञ्चलयस्थानमिति चोच्यते। यथा वनस्य व्यष्ट्यभिप्रायेण वृक्षा इत्यनेकत्वव्यपदेशो यथा वा जलाशयस्य व्यष्ट्यभिप्रायेण जलानीति तथाज्ञानस्य व्यष्ट्यभिप्रायेण तदनेकत्वव्यपदेश "इन्द्रो मायाभिः पुरुरूप ईयत" इत्यादिश्रुतेः।

विशुद्धेति। यद्यपि समष्टेरीश्वरोपाधित्वे पालनार्थं सत्वप्राधान्यवत् सृष्टिसंहारार्थं रजस्तमःप्राधान्यमप्यस्त्येव तथा च सत्वस्यैवो-

क्तिविरुद्धा तथाप्यस्मिन्ग्रन्थे सत्वप्राधान्यं न पालनार्थमुक्तं किन्तु ईश्वरं प्रति समष्टेर्मोहानापादकत्वात् । अत एवाह **उत्कृष्टेति** । व्यष्टेस्तु जीवं प्रति मोहापादकत्वान्मलिनसत्वप्राधान्यमुक्तमिति मन्तव्यम् । **एतदुपहितमिति** । अज्ञानसमष्ट्युपहितमित्यर्थः । ननु ईश्वरोपाधिः अज्ञानसमष्टिः कुतः अज्ञानव्यष्टिरेव किं न स्यादत आह **सकलेति** । जीवानां हि प्रत्येकमज्ञानव्यष्टयः स्फुरन्ति नाज्ञानसमुदायो मानाभावात् । ईश्वरस्य तु सकलान्यज्ञानानि स्फुरन्ति तस्य सर्वज्ञत्वात् । अतः अज्ञानसमष्टिरीश्वरोपाधिरित्यर्थः । अत्रास्मद्गुरवः नाज्ञानसमष्टिरीश्वरोपाधिः । अज्ञानसमष्टिर्हि अज्ञानसमुदायः वनमिव वृक्षसमुदायः । समुदायश्च न समुदायिभ्यो भिन्नो मानाभावात् । एवं च वनं वृक्षात्मकमेव । तथा अज्ञानसमष्टिरपि अनेकाज्ञानात्मिकैव । वनावच्छिन्नश्च आकाशोऽनेकवृक्षावच्छिन्नाकाशसमुदायान्न भिन्नः अनेकवृक्षातिरिक्तोपाधेरभावात् । उपाधिभेदाभावे च उपहितभेदाभावात् । एवं चाज्ञानसमूहोपहितं चैतन्यं नेश्वरः । अज्ञानसमूहोपहितस्य चैतन्यस्य

प्रत्येकाज्ञानोपहितजीवसमुदायरूपत्त्वात् जीवसमुदायस्य च अनीश्वरत्वात् । ततश्च नाज्ञानसमष्टिरीश्वरोपाधिरिति । तस्मादत्र अज्ञानसमष्टिपदेन अनेकाज्ञाननिरूपिता वाचस्पतिमिश्रसंमता एका विषयतैव उक्तेति मन्तव्यम् । सैव च ईश्वरोपाधिः । अज्ञातस्य ब्रह्मणः ईश्वरत्वात् । वनावच्छिन्नाकाशपदेनापि अनेकवृक्षसम्बन्धी यो एकदेशस्तदवच्छिन्नाकाश एव उच्यते । स च प्रत्येकवृक्षावच्छिन्नाकाशेभ्यो भिन्न एव उपाधेर्भिन्नत्वात् । एवं प्रत्येकाज्ञानोपहितजीवानामनेकत्वेपि तद्विषयताया एकत्वात् तदुपहितेश्वरस्य एकत्वमुपपद्यत एव । न च अज्ञानानामनेकत्वे तद्विषयता कथमेकेति वाच्यम् । समवायवदुपपत्तेः यथा हि परेषां मते घटपटादीनामनेकत्वेपि तन्निरूपितस्य समवायस्य एकत्वं घटनाशे च तन्निरूपितत्वमेव नश्यति न समवायः तस्य नित्यत्वात् एवमेकैकाज्ञाननाशेपि विषयतायास्तन्निरूपितत्वमात्रं नश्यति नाज्ञानविषयतेति । तदुपहितेश्वरस्य यावत्सर्वमुक्ति अवस्थानमुपपद्यते । चरममुक्तिदशायां तु तत्वज्ञानेन अविद्यानि-

वृत्तौ तत्प्रयोज्या विषयतापि निवर्तत इति चिन्मात्रमवशिष्यते। तस्मात्सुष्टूक्तमज्ञानविषयतोपहित ईश्वर इति । तदुक्तम् कल्पतरौ जीवाश्रिताभिरविद्याभिर्विषयीकृतत्वमुपाधिरिति । स च सत्वप्रधानाज्ञानविषयतोपहितो विष्णुः । स चाखिलस्य जगतः पालकः। रजःप्रधानाज्ञानविषयतोपहितो ब्रह्मा। स चाखिलस्य जगतः स्रष्टा। तमःप्रधानाज्ञानविषयतोपहितो रुद्रः।स चाखिलस्य जगतः संहर्त्ता। एते च त्रयोऽनादिसिद्धा व्यापकाः सर्वज्ञाश्चेति। ईश्वरसर्वज्ञत्वे प्रमाणमाह यःसर्वज्ञ इति। सर्वज्ञ इति सामान्यतः सर्वविदिति विशेषतः। सर्वेति। सर्वस्य उपरमो यस्यां सा तस्याः भावस्तत्त्वं तस्मादित्यर्थः। अत एवेति। सर्वोपरमत्वादेवेत्यर्थः। पञ्चीकृतापञ्चीकृतादिरूपः स्थूलसूक्ष्मप्रपञ्चः उच्यत इति श्रुताविति शेषः। व्यष्ट्यभिप्रायेणेति। प्रत्येकाज्ञानाभिप्रायेणेत्यर्थः। इन्द्र इति। इन्द्रः परमात्मा प्रकरणात् मायाभिरज्ञानैः पुरुरूपः बहुरूपः ईयते प्रतीयत इत्यर्थः ॥

[७—ग]

अत्र व्यस्तसमस्तव्यापित्वेन व्यष्टिसमष्टिताव्यपदेशः। इयं व्यष्टिर्निकृष्टोपाधितया मलिनसत्त्वप्रधाना। एतदुपहितं चैतन्यमल्पज्ञत्वानीश्वरत्वादिगुणकं प्राज्ञ इत्युच्यत एका-ज्ञानावभासकत्वात्। अस्य प्राज्ञत्वमस्पष्टोपाधितयान-तिप्रकाशकत्वात्। अस्यापीयमहङ्कारादिकारणत्वात्कार-णशरीरमानन्दप्रचुरत्वात्कोशवदाच्छादकत्वाच्चानन्दम-यकोशः सर्वोपरमत्वात्सुषुप्तिरत एव स्थूलसूक्ष्मशरीर-प्रपञ्चलयस्थानमिति चोच्यते॥

अत्रेति। अज्ञाने इत्यर्थः। व्यस्तसमस्तव्यापित्वेनेति। प्रत्येकसमुदायाभिप्रायेणेत्यर्थः। एतदुपहितमिति। अवि-द्योपहितं चैतन्यं जीवं इत्यर्थः। ननु अविद्याधीनं जीवत्वं जीवाश्रिता त्वविद्येति अन्योन्याश्रय इति चेत्। न। तस्य प्रकृते अदोषत्वात्। तथा हि उत्पत्तिः प्रतिबन्धनीया। सा च न अविद्याजीवयोरनादित्वात्। अथ तया ज्ञप्तिः प्रतिबन्धनी-या न। जीवस्य स्वप्रकाशत्वेन स्फुरणात्। अविद्यायास्तत्राध्यस्त-

त्वेन स्फुरणादिति। व्यष्टेर्जीवोपाधित्वे हेतुमाह **एकेति**।जीवाल्पज्ञत्वे प्रमाणमाह **अस्येति** । अस्य प्राज्ञस्यानातिप्रकाशकत्वात्।अनतिप्रकाशकत्वे हेतुमाह **अस्पष्टेति**। मलिनसत्वप्रधानाज्ञानोपाधित्वादित्यर्थः। अस्य जीवस्योपाधिभूतेयं व्यष्टिरूपाविद्येत्यर्थः ॥

[ ८ ]

**तदानीमेतावीश्वरप्राज्ञौ चैतन्यप्रदीप्ताभिरतिसूक्ष्माभिरज्ञानवृत्तिभिरानन्दमनुभवतः"आनन्दभुक् चेतोमुखः प्राज्ञ" इति श्रुतेः सुखमहमस्वाप्सं न किञ्चिदवेदिषमित्युत्थितस्य परामर्शोपपत्तेश्च। अनयोः समष्टिव्यष्ट्योर्वनवृक्षयोरिव जलाशयजलयोरिव वाभेदः। एतदुपहितयोरीश्वरप्राज्ञयोरपि वनवृक्षावच्छिन्नाकाशयोरिव जलाशयजलगतप्रतिबिम्बाकाशयोरिव वा भेद "एष सर्वेश्वर" इत्यादिश्रुतेः ॥**

**तदानीमिति** । सुषुप्तिदशायामित्यर्थः । **ईश्वरेति** । यद्यपि ईश्वरस्य न सुषुप्तिः जागराद्यवस्थानां जीवसम्बन्धित्वात्

तथापि ईश्वरसुषुप्तिपदेन प्रलयो द्रष्टव्यः। एतच्चोपलक्षणम् ईश्वरस्य सदा आनन्दस्फुरणादिति ध्येयम् अज्ञानवृत्त्या च आनन्दस्फुरणं जीवस्यैव ईश्वरस्य च स्वत एवेति मन्तव्यम्। **चैतन्यप्रदीप्ताभिरिति**। वृत्तिर्हि उत्पद्यमाना चिद्व्याप्तैवोत्पद्यते वृत्तेस्तथैव स्वभावात्। तदुक्तं वियद्वस्तुस्वभावानुरोधादेव न कारकात्। वियत्संपूर्णतोत्पत्तौ कुम्भस्यैव दशाधियामिति। अत एव च वृत्तौ परेषां चित्तभ्रम इति भावः। **अतिसूक्ष्माभिरिति**। अस्पष्टाभिरित्यर्थः। तासां कल्प्यत्वादिति भावः। **चेतोमुख इति**। चैतन्यं मुखवद्द्वारं समानं यस्य स ईश्वर इत्यर्थः। ननु सुषुप्तिदशायां किमज्ञानवृत्त्या आनन्दस्फुरणस्य ईश्वरवत् जीवस्यापि स्वत एव सम्भवात् तत्राह **सुखमहमिति**। अयमर्थः उत्थितस्य सुखमहमस्वाप्सं न किंचिदवेदिषमिति परामर्शस्तावज्जायते। स नानुमानम्। लिङ्गाद्यनुसन्धानमन्तरेणापि जायमानत्वात्। किन्तु स्मरणं तच्च न दुःखाभावस्य। सुषुप्तौ दुःखानुभवाभावेन दुःखाभावानुभवाभावात्। अभावज्ञाने प्रतियोगिज्ञानस्य कारणत्वात्। असति च दुःखाभा-

वानुभवे तद्विषयस्य स्मरणस्यानुपपन्नत्वात्। ततश्च सुखस्य स्मरणं वक्तव्यम्। तदपि न जन्यं सुखं तस्य सुषुप्तौ अनुभवायोगात्। किन्तु नित्यस्यैव सुखस्य स्मरणं वक्तव्यम्। स्मरणं च संस्कारजन्यं संस्कारश्चानुभवजन्य इति। नित्यसुखस्य सुषुप्तौ अनुभवो वक्तव्यः। स च न चिद्रूपः। तस्य नित्यत्वेन संस्कारानाधायकत्वात् प्रकारान्तरस्य चासम्भवात्। अतः अविद्यावृत्त्यैव नित्यानन्दस्फुरणं वक्तव्यम्। तया च संस्कारजनने उत्थितस्य सुखमहमस्वाप्समिति स्मरणसम्भवात्। स्वरूपचैतन्येनैवानन्दस्फुरणे तस्य नित्यत्वेन संस्कारानाधायकत्वात्स्मरणानुपपत्तिप्रमङ्गात्। तस्मात्स्मरणान्यथानुपपत्त्या सुषुप्तौ अविद्यावृत्तिरावश्यकी। ईश्वरस्य तु न स्मरणमस्ति किन्तु केवलं सुखानुभवः। स च स्वरूपचैतन्येनैव संभवतीति। किमर्थमज्ञानवृत्तिः स्वीकार्या। अतः अज्ञानवृत्तिभिरित्यग्रे स्वरूपचैतन्येनेत्यपि ज्ञेयमिति। एतदुपहितयोरिति। ननु वनवृक्षावच्छिन्नाकाशयोरभेदो युक्तः। वृक्षातिरिक्तवनाभावेन वृक्षावच्छिन्नाकाशस्यैव वनाकाशत्वात् स्वत-

न्त्रोपाधेरभावात्। नैवं जीवेश्वरयोः औपाधिकयोरभेदो युक्तः उपाध्योर्भेदात्। न च तयोरप्यभेदो युक्तः। तथा सति उपाध्योरभेदे उपहितयोरप्यभेदात्सर्वज्ञत्वकिंचित्ज्ञत्वादिधर्माणां साङ्कर्यप्रसङ्गात् उपाधिनिरूपणवैयर्थ्यापाताच्च। स्वरूपचैतन्यस्य एकत्वेन विरुद्धधर्मसाङ्कर्यं माभूदिति उपाधिभेदनिरूपणेन विरुद्धधर्मव्यवस्था क्रियते। उपाध्यभेदे च विरुद्धधर्मव्यवस्था न सम्भवतीति तन्निरूपणमनर्थकमापद्येत। **एष सर्वेश्वर** इति श्रुतौ न उपहितयोरभेद उच्यते। किन्तु विरुद्धधर्मपरित्यागेन स्वरूपचैतन्यस्य अभेद उच्यते। उपहितयोरभेदे तत्त्वमसिवाक्ये लक्षणावैयर्थ्यप्रसङ्गाच्च तत्र हि शक्त्या उपहितयोरभेद उच्यते। स च उपाध्योर्भेदे न सम्भवतीति लक्षणया उपाध्योः परित्यागेन स्वरूपचैतन्यमात्रं बोध्यते। उपाध्योश्चाभेदे उपहितयोरपि अभेदः शक्त्या प्रतीयमानः सम्भवतीति किं लक्षणया। तस्मान्नोपहितयोरभेद इति अनुपपन्नो ऽयं ग्रन्थ इति चेत्। अत्रोच्यते उपाध्योरभेद इत्यत्र अभेदशब्देन न ऐक्यमुच्यते विरोधात्। किन्तु

भेदशब्देन भेदयतीति व्युत्पत्या भेदकत्वमुच्यते तदभावो अभेदः। एतदुक्तं भवति उपाधिभ्यां हि वस्तुतो न वस्तु भिद्यते नहि घटपटाभ्यां परशुच्छिन्नदारुवत् आकाशो भिद्यते किन्तु उप समीपे स्थित्वा स्वानिष्टभेदजातीयो भेदः अनिर्वचनीय-स्तत्रासज्यते। तस्मादुपाध्योर्न वास्तवं भेदकत्वमिति प्रथमाभेद-शब्देन उच्यते ॥

[ ६ ]

वनवृक्षतदवच्छिन्नाकाशयोर्जलाशयजलतद्गतप्रतिबि-म्बाकाशयोर्वाधारभूतानुपहिताकाशवदनयोरज्ञानतदु-पहितचैतन्ययोराधारभूतं यदनुपहितं चैतन्यं तत्तुरीय-मित्युच्यते "शिवमद्वैतं चतुर्थं मन्यन्त" इत्यादिश्रुतेः। इदमेव तुरीयं शुद्धचैतन्यमज्ञानादितदुपहितचैतन्याभ्यां तप्तायःपिण्डवदविविक्तं सन्महावाक्यस्य वाच्यं विविक्तं सल्लक्ष्यमिति चोच्यते ॥

तत्र दृष्टान्तमाह वनेति। यथा वनवृक्षयोर्जलाशयजलयोर्वा न वास्तवम् व्योमभेदकत्वं तद्वत्प्रकृतोपाध्योरपि न वास्तवम्

तदित्यर्थः । उपाध्योर्वास्तवभेदकत्वाभावे उपहितयोर्वास्तवो ऽभेद इत्याह द्वितीयाभेदशब्देन । न तु अभेदशब्देन उपहितयोर्भेद एव नास्तीत्युच्यते । तस्मान्न विरोधः । यद्वा आत्मभेदवादिनं प्रति शाम्यतु दुर्जन इति न्यायेन औपाधिकयोरप्यभेदः किं पुनः स्वरूपचैतन्यस्येति । प्रौढिवादेनैतदुक्तमिति न दोषः । आधारभूतम् अधिष्ठानभूतमित्यर्थः । जीवेश्वरौ । तदुपाहितचैतन्यशब्दार्थः तच्छब्दः उक्तोपाधिपरामर्शी । तुरीयं चतुर्थम् अज्ञानजीवेश्वरेभ्य इत्यर्थः यद्वा जाग्रत्स्वप्नसुषुप्त्यवस्थाभ्य इत्यर्थः । अज्ञानादीत्यत्र विषयता आदिशब्दार्थः । महावाक्यस्येति । तत्त्वमसिवाक्यस्येत्यर्थः ॥

[१०—क]

अस्याज्ञानस्यावरणविक्षेपनामकमस्ति शक्तिद्वयम् । आवरणशक्तिस्तावदल्पोऽपि मेघोऽनेकयोजनायतमादित्यमण्डलमवलोकयितृनयनपथपिधायकतया यथाच्छादयतीव तथाज्ञानपरिच्छिन्नमप्यात्मानमपरिच्छिन्नम-

संसारिणमवलोकयितृबुद्धिपिधायकतयाच्छादयतीव तादृशं सामर्थ्यम् । तदुक्तम्

"घनच्छन्नदृष्टिर्घनच्छन्नमर्कं
यथा मन्यते निष्प्रभं चातिमूढः ।
तथा बद्धवद्भाति यो मूढदृष्टेः
स नित्योपलब्धिस्वरूपोऽहमात्मेति" ॥

एवं जीवेश्वरौ निरूप्य अज्ञाने शक्तिद्वयं निरूपयति अस्येति । अत्र आवरणविक्षेपनामकमित्यनेनावरणविक्षेपस्वरूपं शक्तिद्वयम् उक्तमिति न भ्रमितव्यम् । आवरणविक्षेपयोः शक्तित्वाभावात् । आवरणं हि चैतन्यनिष्ठम् । आवरणशक्तिस्तु अज्ञाननिष्ठत्वेन व्यवह्रियते साम्प्रदायिकैः । विक्षेपस्तु कार्यं, तत्र चाज्ञानं कारणम् । कारणं च सिद्धान्ते शक्तिमदिति आवश्यकी विक्षेपानुकूला अज्ञाने शक्तिरिति । आवरणं च यद्यपि नाज्ञानकार्यं तस्यानादित्वात् तथापि तत्प्रयोज्यं भवत्येवेति तदनुकूलापि अज्ञाने शक्तिरावश्यकी । तस्मादावरणविक्षेपनामकमित्यावरणविक्षेपानुकूलमित्यर्थः । अत एव तादृशं सामर्थ्यमित्युक्तम्

तादृशमिति । आच्छादनानुकूलमित्यर्थः। ननु कथं परिच्छिन्नमज्ञानमपरिच्छिन्नमात्मानमाच्छादयतीत्याशङ्क्य दृष्टत्वादित्याह अल्पोपीति। मूढदृष्टेरिति । अज्ञानयुक्तस्येत्यर्थः । ननु किमिदम् आवरणम् ।श्रुणु नास्ति न प्रकाशते इत्यादिव्यवहारालम्बनत्वयोग्यता। सा चावश्यकी अन्यथा स्वप्रकाशत्वे नास्ति प्रकाशते इत्यादिव्यवहारयोग्ये ब्रह्मणि नास्ति न प्रकाशते ब्रह्मेति व्यवहारानुपपत्तेः ॥

[१०—ख]

अनयैवावरणशक्त्यावच्छिन्नस्यात्मनः कर्तृत्वभोक्तृत्वसुखदुःखमोहात्मकतुच्छसंसारभावनापि सम्भाव्यते यथा स्वाज्ञानेनावृतायां रज्जौ सर्पत्वसम्भावना । विक्षेपशक्तिस्तु यथा रज्ज्वज्ञानं स्वावृतरज्जौ स्वशक्त्या सर्पादिकमुद्भावयत्येवमज्ञानमपि स्वावृतात्मनि विक्षेपशक्त्याकाशादिप्रपञ्चमुद्भावयति तादृशं सामर्थ्यम् । तदुक्तम्

"विक्षेपशक्तिलिङ्गादि
ब्रह्माण्डान्त जगत्सृजेदि"ति ॥

अनयेति । आवरणशक्तियुक्तया अविद्ययेत्यर्थः । अधिष्ठानावरणे भ्रमः सम्भवति तज्ज्ञाने भ्रमानुपपत्तेरिति भावः । स्वावृत्तरज्जाविति । अज्ञानेनावृत्ते रज्ज्ववच्छिन्ने चैतन्य इत्यर्थः। न च रज्जुरेवावृत्ता किं न स्यादिति वाच्यम् । तस्या जडत्वेन प्रकाशाप्रसक्तेः। प्रकाशप्रसक्तौ च प्रकाशाभावे आवरणकल्पनात् । नन्वेवं रज्ज्ववच्छिन्ने चैतन्ये ऽप्यावरणं न स्यात् तस्य स्वप्रकाशत्वेपि पुरुषान्तरसंवेदनवत् भिन्नत्वेन प्रकाशाप्रसक्तेरिति चेति चेत्। अत्र वदन्ति इदमाकारवृत्तिदशायां प्रमातृचैतन्याभिन्नमपि रज्ज्ववच्छिन्नं चैतन्यं न स्फुरति। अतस्तत्र आवरणं वक्तव्यम्। अन्यथा ऽभेदापन्नत्वेन स्फुरणापत्तेः । न च इदमाकारवृत्त्या इदमंशावच्छिन्नमेव चैतन्यं प्रमातृचैतन्याभिन्नं न तु रज्ज्ववच्छिन्नमिति वाच्यम्। इदंत्वरज्जुत्वयोर्व्याप्यवृत्तित्वेन इदमाकारवृत्तिदशायां रज्ववच्छिन्नस्यापि प्रमातृचैतन्याभिन्नत्वादिति। तत्र इदंत्वरज्जुत्वयोर्व्याप्यवृत्तित्वेपि इदमंशावच्छिन्नं चैतन्यं रज्ज्ववच्छिन्नादभिन्नम् उत भिन्नमिति वक्तव्यम्। अभि-

न्नं चेत् तदा इदमंशावच्छिन्नस्य स्फुरणात् रज्ज्ववच्छिन्नस्यापि चैतन्यस्य स्फुरणं वक्तव्यम्। नहि अभेदे स्फुरणतदभावौ वक्तुम् युक्तौ। ततश्च व्यर्थमावरणं स्फुरणप्रसक्तौ तदभावे सति तस्य कल्पनात्। इदंत्वरज्जुत्वयोर्भिन्नत्वेन तदवच्छिन्नचैतन्ययोरभेदानुपपत्तेश्च भिन्नमिति चेत्तर्हि इदंवृत्त्या इदमंशावच्छिन्नमेव चैतन्यं प्रमातृचैतन्याभिन्नं न तु रज्ज्ववच्छिन्नम्। नहि अन्याकारवृत्त्या अन्यदभेदापन्नं भवति। अन्यथा घटाकारवृत्त्या त्वगिन्द्रियजन्यया रूपावच्छिन्नमपि चैतन्यं प्रमातृचैतन्याभिन्नं स्यात् इदंत्वरज्जुत्वयोरिव रूपघटत्वयोरपि व्याप्यवृत्तित्वात्। तस्मान्नेदं वृत्त्या रज्ज्ववच्छिन्नं चैतन्यं प्रमातृचैतन्याभिन्नम्। भेदे च न प्रकाशप्रसक्तिरिति किमर्थं रज्ज्ववच्छिन्नचैतन्ये आवरणम्। अत्रोच्यते सत्यं न रज्ज्ववच्छिन्ने चैतन्ये प्रकाशप्रसक्तिः तस्य भिन्नत्वात् तथापि न रज्जौ आवरणं वाच्यम्। आवरणस्य चैतन्ये क्लृप्तत्वात् मूलाज्ञानस्य चिन्मात्रविषयत्वेन तदावरणस्य चिन्निष्ठत्वात्। अतः परिच्छिन्नाज्ञानावरणमपि चैतन्ये एव

वक्तव्यम् न तु जडे। तदुक्तम् जडे आवरणाभावादिति । किं चातीतानागतस्थले विषयस्यासत्वेन आवरणाश्रयत्वानुपपत्तेस्तदुपलक्षिते चैतन्ये आवरणं वाच्यमिति तस्यैव सर्वत्र तदाश्रयत्वम् तस्माद्युक्तमुक्तं रज्ज्वविच्छिन्नस्य चैतन्यस्य आवृत्तत्वम्। रज्जौ आवृत्तत्वं तु अदूरविप्रकर्षेण व्यपादिश्यत इति सम्प्रदायविदः। **एवमज्ञानमपीति**। मूलाज्ञानमित्यर्थः। **तादृशमिति**। प्रपञ्चजननानुकूलमित्यर्थः। **विक्षेपशक्तिरिति**। विक्षेपशक्तियुक्ता अविद्येत्यर्थः। लिङ्गशब्देन लिङ्गशरीरमुच्यते। तच्चाग्रे वक्ष्यते॥

[ ११ ]

**शक्तिद्वयवदज्ञानोपहितं चैतन्यं स्वप्रधानतया निमित्तं स्वोपाधिप्रधान्यतयोपादानं च भवति। यथा लूता तन्तुकार्यं प्रति स्वप्रधानतया निमित्तं स्वशरीरप्रधानतयोपादानं च भवति॥**

एवमज्ञाने निरूपिते तत्कार्यं निरूपयितुं तत्र उपादानं निमित्तं च निरूपयति शक्तीति। अज्ञानोपहितमिति। अज्ञानविषयतोपहि-

तमित्यर्थः। अज्ञानोपहितस्य जीवत्वात् जीवस्य च अस्वतन्त्रत्वेन जगन्निमित्तत्वाभावात्तदुपादानत्वाभावाच्चेति द्रष्टव्यम्। **स्वप्रधानतयेति**। निमित्तशब्देन हि अत्र न दण्डादिसाधारणं निमित्तकारणत्वमात्रमुच्यते किन्तु कर्तृत्वम्। तच्च कार्यानुकूलज्ञानवत्वं तच्च स्वरूपेणैव ईश्वरस्य संभवति नाविद्याद्वारा तस्या जडत्वादिति भावः। **स्वोपाधीति**। उपादानत्वं हि विवर्त्तमानत्वम्। न तु यत्समवेतं कार्यमुत्पद्यत इत्यादि पराभिमतम्। समवायानङ्गीकारात्। तच्च विवर्त्तमानत्वं न स्वरूपेण चैतन्यस्य किन्तु अविद्याद्वारेति तस्याः प्राधान्यम्। अत एव विवर्त्तमानाविद्याधिष्ठानत्वरूपम् उपादानत्वम् ईश्वरस्येत्युक्तमिति भावः। ननु कथमेकस्य निमित्तत्वमुपादानत्वं चेति तत्राह **यथेति**। लूता उर्णनाभिः स्वशरीरेति लालारूपस्वशरीरावयवप्रधानतयेत्यर्थः। तन्त्वाकारेण हि लालारूप उर्णनाभिशरीरावयवः परिणमते। न तु तच्छरीरं शरीरापाये तन्त्वपायप्रसङ्गात्। तदुक्तम् शारीरके तन्तुनाभस्य क्षुद्रतरजन्तुभक्षणाल्लाला कठिनतामापद्यमाना तन्तुर्भवतीति ॥

[ १२ ]

तमःप्रधानविक्षेपशक्तिमदज्ञानोपहितचैतन्यादाकाश आकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी चोत्पद्यत "एतस्मादात्मन आकाशः सम्भूत" इत्यादिश्रुतेः । तेषु जाड्याधिक्यदर्शनात्तमःप्राधान्यं तत्कारणस्य । तदानीं सत्वरजस्तमांसि कारणगुणप्रक्रमेण तेष्वाकाशादिषूत्पद्यन्ते । एतान्येव सूक्ष्मभूतानि तन्मात्राण्यपञ्चीकृतानि चोच्यन्ते । एतेभ्यः सूक्ष्मशरीराणि स्थूलभूतानि चोत्पद्यन्ते ॥

विक्षेपशक्तिप्रधानाज्ञानोपहितेत्यत्रापि पूर्ववदेव व्याख्या । तमःप्राधान्ये हेतुमाह तेष्विति । तत्कारणस्येति । आकाशादिकारणस्याज्ञानस्येत्यर्थः । तदानीमिति । सृष्टिकाल इत्यर्थः । यद्यपि अज्ञानगतसत्वरजस्तमोव्यतिरेकेण तत्कार्ये सत्वरजस्तमांसि न भिन्नानि सन्ति मानाभावात् अज्ञानगतेषु तु तेषु 'देवात्मशक्तिम् स्वगुणैर्निगूढाम्' इत्यादिवचनमेव प्रमाणं तथापि सत्वरजस्तमांसि उत्पद्यन्त इत्यनेन अज्ञानगतसत्वरजस्तमःका-

र्यंजाड्यादेरेव उत्पत्तिरुक्तेति मन्तव्यम्। **एतानीति**। आकाशा-दीनीत्यर्थः। **सूक्ष्मेति**। विरलावयवानीत्यर्थः। न तु सूक्ष्मत्वम् अणुपरिमाणवत्वम् अपञ्चीकृतभूतानां व्यापकत्वात्। **उच्यन्त इति**। श्रुत्यादाविति शेषः। **स्थूलभूतानीति**। अत्र गुरवः अप-ञ्चीकृतेभ्यः पञ्चीकृतात्मकस्थूलभूतानां नोत्पत्तिः मानाभावात्। आत्मन आकाशः संभूत इत्याद्युत्पत्तिश्रवणवत् अपञ्चीकृते-भ्यः पञ्चीकृतभूतोत्पत्तेः श्रवणाभावात्। अपञ्चीकृतातिरिक्तप-ञ्चीकृताङ्गीकारे गौरवाच्च। तस्माद्यथा तन्तुभ्योऽतिरिक्तो न पटः किन्तु संयोगविशेषमापन्नास्तन्तव एव पटः लाघवात् अति-रिक्तत्वे मानाभावाच्च, एवम् अपञ्चीकृतान्यपि पञ्चीकरणात्म-कसंयोगविशेषमापन्नानि पञ्चीकृतान्युत्पद्यन्ते। न तु अपञ्ची-कृतेभ्यः पञ्चीकृतानि* भिन्नानि उत्पद्यन्ते आत्मन इव आका-शः। अत एव तत्वदीपने अपञ्चीकृतानि प्रारब्धवशात्पञ्चीकृत-तामापद्यन्त इत्युक्तम्। यदि च अपञ्चीकृतेभ्यः पञ्ची-

* पञ्ची कृतानि उत्पद्यन्ते इति पुस्तकान्तरे पाठः।

कृतभूतोत्पत्तिः स्यात्तदा यथा तत्र अपञ्चीकृतानि तत्तत्कर्मानुरोधेन लिङ्गशरीरं जनयन्तीत्युक्तम् तथा अपञ्चीकृतानि पञ्चीकृतानि जनयन्तीत्येवमुक्तम् स्यात्। न तु पञ्चीकृततामापद्यन्त इत्युक्तं स्यादिति। तस्मान्नापञ्चीकृतेभ्यः पञ्चीकृतोत्पत्तिरिति। तथा च एतेभ्यः स्थूलभूतान्युत्पद्यन्त इत्यनेन संयोगविशेषस्यैव उत्पत्तिरुक्ता भवतीति ध्येयम् ॥

[१३—क]

सूक्ष्मशरीराणि सप्तदशावयवानि लिङ्गशरीराणि। अवयवास्तु ज्ञानेन्द्रियपञ्चकं बुद्धिमनसी कर्मेन्द्रियपञ्चकं वायुपञ्चकं चेति। ज्ञानेन्द्रियाणि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यानि। एतान्याकाशादीनां सात्त्विकांशेभ्यो व्यस्तेभ्यः पृथक् पृथक् क्रमेणोत्पद्यन्ते। बुद्धिर्नाम निश्चयात्मिकान्तःकरणवृत्तिः। मनो नाम सङ्कल्पविकल्पात्मिकान्तःकरणवृत्तिः। अनयोरेव चित्ताहङ्कारयोरन्तर्भावः। एते पुनराकाशादिगतसात्त्विकांशेभ्यो मिलितेभ्य उत्पद्यन्ते। एतेषां प्रकाशात्मकत्वात्सात्त्विकांशकार्यत्वम्। इयं बुद्धिर्ज्ञानेन्द्रियैः सहिता सती विज्ञानमयकोशो भवति।

अयं कर्तृत्वभोक्तृत्वसुखित्वदुःखित्वाद्यभिमानत्वेनेहलोकपरलोकगामी व्यावहारिको जीव इत्युच्यते । मनस्तु ज्ञानेन्द्रियैः सहितं सन्मनोमयकोशो भवति ॥

सूक्ष्मशरीराणि निरूपयति सूक्ष्मेति । सप्तेति । सप्तदश अवयवा एकदेशा येषां तानि । श्रोत्रादीनां क्रमः तदुत्पादकभूतक्रमात् द्रष्टव्यः । एते चित्तबुद्धिमनोहंकाररूपाः अन्तःकरणभेदाः । मिलितेभ्य इति । अन्तःकरणस्य गन्धाद्युपलब्धौ साधारणत्वात् पञ्चभूतारभ्यत्वम् । क्वचित्तैजसत्वव्यपदेशस्तु तेजोबाहुल्यादेव । अतोऽन्तःकरणपरिणामचित्तादीनां पञ्चभूतारभ्यत्वमुक्तमिति द्रष्टव्यम् । श्रोत्रादेस्तु शब्दाद्युपलब्धौ असाधारणत्वाद्व्यस्तभूतारभ्यत्वमिति भावः । एतेषामिति । श्रोत्रादीनां चित्तादीनां चेत्यर्थः। प्रसङ्गादाह इयमित्यादिना । अयमिति । विज्ञानमय इत्यर्थः । एतच्चोपलक्षणं लिङ्गशरीरोपहितस्य इहलोकपरलोकगामित्वात् ॥

[ १३—ख ]

कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थाख्यानि । एतानि

पुनराकाशादीनां रजोंशेभ्यो व्यस्तेभ्यः पृथक् पृथक् क्रमेणोत्पद्यन्ते । वायवः प्राणापानव्यानोदानसमानाः । प्राणो नाम प्राग्गमनवान्नासाग्रस्थानवर्त्ती । अपानो नामार्वाग्गमनवान्पाय्वादिस्थानवर्त्ती । व्यानो नाम विष्वग्गमनवानखिलशरीरवर्त्ती । उदानो नाम कण्ठस्थानीय ऊर्ध्वगमनवानुत्क्रमणवायुः । समानो नाम शरीरमध्यगताशितपीतान्नादिसमीकरणकरः । केचित्तु नागकूर्मकृकलदेवदत्तधनञ्जयाख्याः पञ्चान्ये वायवः सन्तीति वदन्ति । तत्र नाग उद्गिरणकरः । कूर्म उन्मीलनकरः । कृकलः क्षुत्करः । देवदत्तो जृम्भणकरः । धनञ्जयः पोषणकरः ॥

कर्म्मेन्द्रियाणीति । वाक् नभोविकारः, पाणिः वायुविकार इत्यादि स्वयमूह्यम् । अननं गमनं, विष्वक् समन्तात् समीकरणं साम्यावस्था, उद्गिरणम् उद्गारः, उन्मीलनं निमीलनस्योपलक्षणं प्राणस्यापि अन्तःकरणवत् साधारणत्वात् पञ्चभूतारभ्यत्वमिदमित्यादि सुगमम् ॥

[ १३—ग ]

एतेषां प्राणादिष्वन्तर्भावात्प्राणादयः पञ्चैवेति केचित् ।

एतत्प्राणादिपञ्चकमाकाशादिगतरजोंशेभ्यो मिलितेभ्य उत्पद्यते। इदं प्राणादिपञ्चकं कर्मेन्द्रियैः सहितं सत्प्राणमयकोशो भवति। अस्य क्रियात्मकत्वेन रजोंशकार्यत्वम्। एतेषु कोशेषु मध्ये विज्ञानमयकोशो ज्ञानशक्तिमान् कर्तृरूपः। मनोमय इच्छाशक्तिमान् करणरूपः। प्राणमयः क्रियाशक्तिमान् कार्यरूपः। योग्यत्वादेवमेतेषां विभाग इति वर्णयन्ति। एतत्कोशत्रयं मिलितं सत्सूक्ष्मशरीरमित्युच्यते॥

अस्येति | कर्मेन्द्रियपञ्चकस्य वायुपञ्चकस्य चेत्यर्थः॥

[ १४—क ]

अत्राप्यखिलसूक्ष्मशरीरमेकबुद्धिविषयतया वनवज्जलाशयवद्वा समष्टिः अनेकबुद्धिविषयतया वृक्षवज्जलवद्वा व्यष्टिरपि भवति। एतत्समष्ट्युपहितं चैतन्यं सूत्रात्मा हिरण्यगर्भः प्राणश्चेत्युच्यते सर्वत्रानुस्यूतत्वाज्ज्ञानेच्छाक्रियाशक्तिमदुपहितत्वाच्च। अस्यैषा समष्टिः स्थूलप्रपञ्चापेक्षया सूक्ष्मत्वात्सूक्ष्मशरीरं विज्ञानमयादिकोशत्रयं जाग्रद्वासनामयत्वात्स्वप्नः अत एव स्थूलप्रपञ्चलयस्थानमितिं चोच्यते॥

अत्रापीति । ननु यथा वृक्षसमुदायो वनं तथा लिङ्गश-रीरसमुदायो न समष्टिः । तथा सति वृक्षावच्छिन्नाकाश-समुदायो यथा वनावच्छिन्नाकाशः न त्वतिरिक्तोऽस्ति अतिरिक्तोपाधेरभावात्, एवं समष्टिलिङ्गशरीरोपहितहिरण्यगर्भो ऽपि परिच्छिन्नलिङ्गशरीरोपहित अस्मदाद्यनेकजीवसमूह इत्या-पद्येत अतिरिक्तोपाधेरभावात् । न चैतद्युक्तम् । हिरण्यगर्भस्य प्र-भूतपुण्यजीवविशेषस्यास्मदादिभ्यो भिन्नत्वेन श्रूयमाणत्वात् । किंच समः प्लुषिणा समो नागेन समो मशकेनेत्यादिना वायु-ना वै गौतमसूत्रेणेत्यादिना च हिरण्यगर्भलिङ्गशरीरस्य व्या-पकत्वम् एकत्वं च प्रतीयते । तत् परिच्छिन्नलिङ्गशरीरोपहितास्म-दाद्यनेकजीवसमूहस्य हिरण्यगर्भत्वेन युज्यते । किंच ज्ञानमप्र-तिमम् यस्येत्यादिना हिरण्यगर्भस्य सर्वज्ञत्वादि प्रतीयते । य-दि च जीवसमूहस्य हिरण्यगर्भत्वम् तदा समूहस्य समूहिभ्यो ऽतिरिक्तत्वाभावेनास्मदादीनामेव हिरण्यगर्भत्वात् सर्वज्ञत्वादि-प्रसङ्गः । न चैतत् अनुभवविरोधात् । तस्मान्न लिङ्गशरीरसमुदायः

समष्टिरिति चेत् । सत्यम् न लिङ्गशरीरसमुदायः समष्टिः । किन्तु व्यापकम् लिङ्गशरीरम् समष्टिशब्देनोच्यते । तदुपहितश्च हिरण्यगर्भ इति तस्य व्यापकत्वम् एकत्वञ्च युज्यते । अयं च आधिकारिकः कश्चित् जीव एव न त्वीश्वरः । सो ऽबिभेदित्यादिना भयरत्यादिश्रवणात् । व्यष्टिशब्देन च परिच्छिन्नानि लिङ्गशरीराण्युच्यन्ते । तदुपहिताश्च अनेके अस्मदादयो जीवाः । व्यष्टिसमष्टिलिङ्गशरीरयोस्तु नाभेदः । तथा सति तदुपहितयोरप्यभेदे सर्वज्ञत्वादिधर्मसाङ्कर्यप्रसङ्गात् । मूले तु अभेदशब्दः पूर्ववद्व्याख्येय इति । सूत्रात्मेति । व्यपदेशे युक्तिमाह सर्वत्रेति । वायुना वै गौतमसूत्रेण अयं च लोकः परश्च लोकः सर्वाणि चलानि भूतानि संदब्धानीति वचनादिति भावः। हिरण्यगर्भेति व्यपदेशे युक्तिमाह ज्ञानेति। प्राणेति व्यपदेशतामाह क्रियेति। अत एवेति । यतो वासनामयम् अत एवेत्यर्थः । अन्तःकरणस्य तेजोमयत्वम् तेजोबाहुल्यात् ॥

[१४—ख]

एतद्व्यष्ट्युपहितं चैतन्यं तैजसो भवति तेजोमयान्तः-करणोपहितत्वात् । अस्यापीयं व्यष्टिः स्थूलशरीरापेक्षया सूक्ष्मत्वादिति हेतोरेव सूक्ष्मशरीरं विज्ञानमयादिकोशत्रयं जाग्रद्वासनामयत्वात्स्वप्नः अत एव स्थूलशरीरलयस्थानमिति चोच्यते । एतौ सूत्रात्मतैजसौ तदानीं मनोवृत्तिभिः सूक्ष्मविषयाननुभवतः "प्रविविक्तभुक्तैजस" इत्यादिश्रुतेः । अत्रापि समष्टिव्यष्ट्योस्तदुपहितसूत्रात्मतैजसयोर्वनवृक्षवत्तदवच्छिन्नाकाशवच्च जलाशयजलवत्तद्गतप्रतिविम्बाकाशवच्चाभेदः । एवं सूक्ष्मशरीरोत्पत्तिः ॥

तदानीमिति । स्वप्नकाल इत्यर्थः । सूक्ष्मविषयान् । प्रातिभासिकान् रथादीनित्यर्थः । यत्तु वासनानिर्मितत्वेन सूक्ष्मत्वमिति तन्न । सत्कार्यवादे घटादेरपि वासनाजन्यत्वेन सूक्ष्मत्वापत्तेः । न च वासनामात्रजन्यत्वेन सूक्ष्मत्वमिति वाच्यम् । स्वाप्निकपदार्थानाम् अज्ञानजन्यत्वेन वासनामात्राजन्यत्वात् । मनोवृत्तिभिरिति । यद्यपि स्वाप्निकपदार्थानाम् साक्षिणि अध्य-

स्तत्वेन सुखादिवत् साक्षिवेद्यत्वं न च साक्षिणि अध्यासे इदंतया प्रतिभासः कथमिति वाच्यम्। तस्यापि भ्रान्तत्वात्। एतच्च देशोपि तादृश एवेत्यादिना स्वप्नटीकायाम् स्फुटम्। किंच मनोवृत्तेः प्रमाणसहकारित्वेन तदानीं च प्रमाणोपरमान्न मनोवृत्तिगम्यत्वम् स्वाप्निकानाम् किन्तु साक्षिवेद्यत्वमेव। तथापि मनसि वृत्तिर्वर्त्तनं येषाम् ते निद्रादिदोषाः तैः साहाय्यं प्राप्य स्वयं विषयाननुभवत इत्यर्थ इति द्रष्टव्यम्। स्वाप्निकपदार्थाश्च मूलाज्ञानकार्या इत्यन्यत्र विस्तरः अस्मत्तातकृतौ च। लिङ्गशरीरनिरूपणम् उपसंहरति एवमिति ॥

[ १५ ]

स्थूलभूतानि तु पञ्चीकृतानि। पञ्चीकरणं त्वाकाशादिपञ्चस्वेकैकं द्विधा समं विभज्य तेषु दशसु भागेषु प्राथमिकान्पञ्च भागान्प्रत्येकं चतुर्धा समं विभज्य तेषां चतुर्णां भागानां स्वस्वद्वितीयार्धभागपरित्यागेन भागान्तरेषु योजनम्। तदुक्तं

"द्विधा विधाय चैकैकं चतुर्धा प्रथमं पुनः।

स्वस्वेतरद्वितीयांशैर्योजनात्पञ्चपञ्च ते" इति ॥

अस्याप्रामाण्यं नाशङ्कनीयं त्रिवृत्करणश्रुतेः पञ्चीकरणस्याप्युपलक्षणत्वात् । पञ्चानां पञ्चात्मकत्वे समानेऽपि तेषु च "वैशेष्यात्तद्वादस्तद्वाद" इतिन्यायेनाकाशादिव्यपदेशः सम्भवति । तदानीमाकाशे शब्दोऽभिव्यज्यते वायौ शब्दस्पर्शावग्नौ शब्दस्पर्शरूपाण्यप्सु शब्दस्पर्शरूपरसाः पृथिव्यां शब्दस्पर्शरूपरसगन्धाश्च ॥

स्थूलानि निरूपयति स्थूलेति । तासामेकैकाम् त्रिवृतम् त्रिवृतम् करवाणीति त्रिवृत्करणश्रुतिः । त्रिवृत्करणं तु त्रयाणाम् भूतानाम् तेजोऽबन्नानाम् एकैकम् द्विधा विभज्य अर्द्धत्रयमपि प्रत्येकम् द्विधा विभज्य तत्तदर्द्धद्वयस्य स्वार्द्धपरित्यागेनार्द्धान्तरे योजनम् । उपलक्षणत्वादिति । आत्मनः आकाशः सम्भूत इत्यादिना पञ्चानामपि भूतानाम् सृष्ट्याम्नानात्पुराणादौ आकाशवाय्वोरपि स्थूलसूक्ष्मविभागाम्नानादिति भावः । ननु पञ्चानाम् पञ्चात्मकत्वे समाने कथमसाधारण्येन पृथिव्यादिव्यपदेशस्तत्राह पञ्चानामिति । वैशेष्यात् । पृथिव्यादि-

भागानाम् आधिक्यात् । तद्वादः । पृथिव्यादिव्यपदेश इत्यर्थः । एवं च पञ्चीकरणे आकाशवाय्वोरपि रूपवत्वमहत्वाभ्याम् चाक्षुषत्वम् प्रसज्यत इति दूषणम् परास्तम् । रूपवत्वमहत्वयोर्विद्यमानत्वेपि आकाशादिभागयोराधिक्येन तदभिभवोपपत्तेः । अन्यथा त्रिवृत्करणपक्षेपि तेजसि गन्धोपलम्भप्रसङ्गः । पञ्चीकरणानङ्गीकारे दूषणान्तरमाह तदानीमिति । पञ्चीकरणकाल इत्यर्थः । पञ्चीकरणानङ्गीकारे आकाशवाय्वोः सूक्ष्मत्वेन सूक्ष्मपृथिव्यां गन्धानुपलम्भवत् तयोः शब्दस्पर्शानुपलम्भप्रसङ्ग इति भावः ॥

[१६]

एतेभ्यः पञ्चीकृतेभ्यो भूतेभ्यो भूर्भुवःस्वर्महर्जनस्तपःसत्यमित्येतन्नामकानामुपर्युपरिविद्यमानानामतलवितलसुतलरसातलतलातलमहातलपातालनामकानामधोऽधो विद्यमानानां लोकानां ब्रह्माण्डस्य तदन्तर्वर्त्तिचतुर्विधस्थूलशरीराणां तदुचितानामन्नपानादीनां चोत्पत्तिर्भवाति । चतुर्विधशरीराणि तु जरायुजाण्डजोद्भिज्जस्वेदजाख्यानि । जरायुजानि जरायुभ्यो जातानि मनुष्यपश्वादीनि ।

अण्डजान्यण्डेभ्यो जातानि पक्षिपन्नगादीनि । उद्भिज्जानि भूमिमुद्भिद्य जातानि कक्षवृक्षादीनि। स्वेदजानि स्वेदेभ्यो जातानि यूकामशकादीनि ॥

उपरि विद्यमानानामित्यादिषष्ठ्यन्तानाम् एतेभ्यः उत्पत्ति-र्भवतीत्यन्वयः । शरीराणीत्यादि स्पष्टम् ॥

[ १७—क ]

अत्रापि चतुर्विधसकलस्थूलशरीरमेकानेकबुद्धिविष-यतया वनवज्जलाशयवद्वा समष्टिः वृक्षवज्जलवद्वा व्य-ष्टिरपि भवति । एतत्समष्ट्युपहितं चैतन्यं वैश्वानरो विराडित्युच्यते सर्वनराभिमानित्वाद्विविधं विराजमान-त्वाच्च । अस्यैषा समष्टिः स्थूलशरीरमन्नविकारत्वा-दन्नमयकोशः स्थूलभोगायतनत्वाच्च स्थूलशरीरं जाग्र-दिति च व्यपदिश्यते । एतद्व्यष्ट्युपहितं चैतन्यं विश्व इत्युच्यते सूक्ष्मशरीराभिमानमपरित्यज्य स्थूलशरीरादि-प्रविष्टत्वात् । अस्याप्येषा व्यष्टिः स्थूलशरीरमन्नविकार-त्वादेव हेतोरन्नमयकोशो जाग्रदिति चोच्यते ॥

एतत्समष्टीति । अत्राहुः न स्थूलशरीरसमुदायः

समष्टिः । तथा सति स्थूलशरीरोपहितो ऽस्मदादिजीव-समुदाय एव विराट् स्यात् । न चैतद्युक्तम् । विराजः भिन्नतया श्रवणात् । नापि व्यापकम् स्थूलशरीरम् समष्टिः तदुपहितश्च विराडिति युक्तम् । अस्मदादिवत् विराजः प्रत्यक्षत्वप्रसङ्गात् । तस्मान्न समष्ट्युपहितो विराट् किन्तु परिच्छिन्नचतुर्मुखस्थूलशरीरोपहितः सत्यलोकाधिपतिः सर्वज्ञः हिरण्यगर्भाच्छितगुणापकृष्टानन्दभुग् जीवविशेष एव विराट् । तस्य च समष्ट्युपहितत्वम् अस्मदादिसकलस्थूलशरीराभिमानात् क्वचिद्व्यपदिश्यते । न तु वस्तुतः समष्ट्युपहितत्वम् उक्तहेतोः । स चास्मदादिभ्यो भिन्नः । अन्यथा सर्वज्ञत्वादिधर्मसाङ्कर्य्यं स्यादिति । अन्नं पृथिवी अज्ञानोपहितः आनन्दमयः बुद्ध्युपहितः विज्ञानमयः मनसा उपहितः मनोमयः प्राणोपहितः प्राणमयः स्थूलशरीरोपहितश्चान्नमय इति आखण्डलार्थः । विश्वेति । अज्ञानोपहितः प्राज्ञः लिङ्गशरीरोपहितस्तैजसः स्थूलशरीरोपहितश्च विश्व इत्याखण्डलार्थः । जाग्रदिति । जाग्रद्दशायां विद्यमानत्वादित्यर्थः ॥१

[ १७—ख ]

तदानीमेतौ विश्ववैश्वानरौ दिग्वातार्कवरुणाश्विभिः क्रमान्नियन्त्रितेन श्रोत्रादीन्द्रियपञ्चकेन क्रमाच्छब्दस्पर्शरूपरसगन्धानग्नीन्द्रोपेन्द्रयमप्रजापतिभिः क्रमान्नियन्त्रितेन वागादीन्द्रियपञ्चकेन क्रमाद्वचनादानगमनविसर्गानन्दांश्चन्द्रचतुर्मुखशङ्कराच्युतैः क्रमान्नियन्त्रितेन मनोबुद्ध्यहङ्कारचित्ताख्येनान्तरिन्द्रियचतुष्केण क्रमात्सङ्कल्पविकल्पनिश्चयाहङ्कार्यचैत्तांश्च सर्वानेतान् स्थूलविषयाननुभवतो "जागरितस्थानो बहिःप्रज्ञ" इत्यादिश्रुतेः। अत्राप्यनयोः स्थूलव्यष्टिसमष्ट्योस्तदुपहितविश्ववैश्वानरयोश्च वनवृक्षवत्तदवच्छिन्नाकाशवच्च जलाशयजलवत्तद्गतप्रतिबिम्बाकाशवच्च पूर्ववदभेदः। एवं पञ्चीकृतपञ्चभूतेभ्यः स्थूलप्रपञ्चोत्पत्तिः॥

तदानीमिति। जाग्रद्दशायामित्यर्थः। द्वितीयान्तानां गन्धानित्यादीनामनुभवत इत्यनेन सम्बन्धः, वागादीन्द्रियपञ्चकेनेत्यस्य अग्रे जनितानिति शेषः। वचनादीन् आनन्दान्तान् यथायथं ज्ञानेन्द्रियैः साक्षिणा वा अनुभवत इत्यर्थ इति द्रष्टव्यम्। कर्मेन्द्रि-

याणामनुभावकत्वाभावात् चतुर्मुखो विराट्। मनोबुद्ध्यादीनामिन्द्रियत्वम् संकल्पादिग्राहकत्वं च उपचारादुक्तम्, तेषाम् तैः सह भेदात्। उपचारश्च संकल्पादीनां स्वसाक्षिप्रत्यक्षविषयत्वेन हेतुत्वात् अत्रापीत्येतदेकदेशिमतम्। औपाधिकयोरभेदायोगात् विराजः समष्ट्युपहितत्वाभावाच्चेति केचित्। अभेदशब्दः भेदयतीति व्युत्पत्त्या पूर्ववद्व्याख्येयः। समष्ट्युपहितत्वन्तु सकलाभिमानित्वादिति वार्थः। स्थूलनिरूपणमुपसंहरति एवमिति ॥

[ १८ ]

एतेषां स्थूलसूक्ष्मकारणप्रपञ्चानामपि समष्टिरेको महान्प्रपञ्चो भवति यथावान्तरवनानां समष्टिरेकं महद्वनं भवति यथा वावान्तरजलाशयानां समष्टिरेको महान् जलाशयः। एतदुपहितं वैश्वानरादीश्वरपर्यन्तं चैतन्यमप्यवान्तरवनावच्छिन्नाकाशवदवान्तरजलाशय-गतप्रतिबिम्बाकाशवच्चैकमेव। आभ्यां महाप्रपञ्चतदुपहितचैतन्याभ्यां तप्तायःपिण्डवदविविक्तं सदनुपहितं चैतन्यं "सर्वं खल्विदं ब्रह्म" इति महावाक्यस्य वाच्यं

भवति विविक्तं सल्लक्ष्यमपि भवति। एवं वस्तुन्यवस्त्वारोपोऽध्यारोपः सामान्येन प्रदर्शितः॥

स्थूलेति। यद्यपि न स्थूलसमष्टिःतथापि स्थूलव्यष्टिरेव विराजः समष्टिरुक्तेति मन्तव्यम्। एकमेवेति। एतच्चोपासनार्थं विराट्-हिरण्यगर्भयोर्जीवत्वेन ईश्वराभेदायोगात् जीवत्वं च भयादिश्रवणादित्युक्तम् वास्तवाभेदाभिप्रायं वा एतदिति सम्प्रदायः॥

[ १६—क ]

इदानीं प्रत्यगात्मनीदमिदमयमयमारोपयतीति विशेषत उच्यते। अतिप्राकृतस्तु * "आत्मा वै जायते पुत्र" इत्यादिश्रुतेः स्वस्मिन्निव पुत्रेऽपि प्रेमदर्शनात्पुत्रे पुष्टे नष्टे चाहमेव पुष्टो नष्टश्चेत्याद्यनुभवाच्च पुत्रं आत्मेति वदति। चार्वाकस्तु "स वा एष पुरुषोऽन्नरसमय" इत्यादिश्रुतेः प्रदीप्तगृहात्स्वपुत्रं परित्यज्यापि स्वस्य निर्गमदर्शनात्स्थूलोऽहं कृशोऽहमित्याद्यनुभवाच्च स्थूलशरीरमात्मेति वदति॥

---

* प्रत्यक्षादिसन्निहितस्यापत्यादिधर्मिण इदमिदमिदमानिर्देशः क्रियत इति पुस्तकान्तरे पाठः।

इदानीमिति। सामान्यतः अध्यारोपनिरूपणानन्तरमित्यर्थः। इदमिदमिति। वक्ष्यमाणं पुत्रत्वादीत्यर्थः। अयमयमिति। सप्त-वादीत्यर्थः। आत्मा वै पुत्र इति। यद्यपि प्राकृतानां श्रुत्युपन्यासो न युक्तः तत्प्रामाण्यानङ्गीकारात् तथापि सिद्धान्तिना तत्प्रा-माण्याङ्गीकारेण तं प्रति तदुपन्यासो युक्त इति भावः। एवमग्रेपि द्रष्टव्यम्*। अतिप्राकृतात् विशेषमाह प्रदीप्तेति। आत्मा वै पुत्र इत्यादिश्रुतिस्तु पुत्रस्य प्रियत्वमाहेत्यर्थः ॥

[ १६—ख ]

अपरश्चार्वाकः "तं ह प्राणाः प्रजापतिमेत्य ब्रूयुः" इत्यादिश्रुतेरिन्द्रियाणामभावे शरीरचलनाभावात्काणोऽहं बधिरोऽहमित्याद्यनुभवाच्चेन्द्रियाण्यात्मेति वदति। अप-रश्चार्वाकः "अन्योऽन्तर आत्मा प्राणमय" इत्यादिश्रुतेः प्राणाभावे इन्द्रियादिचलनायोगादहमशनायावानहं पि-पासावानित्याद्यनुभवाच्च प्राण आत्मेति वदति। अन्यस्तु चार्वाकः "अन्योऽन्तर आत्मा मनोमय" इत्यादिश्रुतेर्म-नसि सुप्ते प्राणादेरभावादहं सङ्कल्पवानहं विकल्पवानि-

---

* अयं पाठः पुस्तकान्तरे नास्ति।

त्याद्यनुभवाच्च मन आत्मेति वदति ॥

प्राणाः इन्द्रियाणि। ब्रूयुरिति । तथा चेन्द्रियाणां चेतनत्वमाश्रयणीयम् अन्यथा वचनासंभव इति भावः । शरीराद्विशेषमाह इन्द्रियाणामिति। उपजीव्यत्वादिन्द्रियाणामात्मत्वमिति भावः । स वा एष इत्यादिश्रुतिस्तु स्थूलदृष्ट्यभिप्राया अन्यथा उत्तरश्रुतिविरोध इत्यर्थः। स्थूलस्य आत्मत्वे बाल्यदृष्टं कौमारादौ न स्मरेदित्यादि द्रष्टव्यम्। स्थूलोहमित्याद्यनुभवस्तु देहस्य तादात्म्याध्यासात् न च प्रामाणिकस्य तस्य कथमध्यास इति वाच्यम्। शरीरत्वादिना प्रामाणिकत्वेपि तादात्म्याभिनिविष्टमनुष्यत्वेनाध्यासात्। अन्यो ऽन्तर आत्मेति। अन्नमयादित्यर्थः। प्राणाभाव इति। मरणकाल इति शेषः। तथा चोपजीव्यत्वात् प्राणस्यैव आत्मत्वम् । देह प्राणा इति श्रुतिस्तु इन्द्रियाधिष्ठातृदेवताभिप्राया । इन्द्रियाणामेव आत्मत्वे पुरुषं प्राप्य अस्तं यन्तीत्यादिश्रुतिविरोधः, यश्चक्षुषा रूपमद्राक्षं स एवाहं त्वगिन्द्रियेण स्पर्शमनुभवामीत्याद्यनुभवविरोधश्च स्यात् । बधिरोऽह-

मित्याद्यनुभवस्तु बधिरत्वादिधर्माध्यासादिति केचित्। अन्ये तु बधिरत्वादिना इन्द्रियाणां तादात्म्याध्यास इत्याहुः। अशनाया अशितुमिच्छा पातुमिच्छा पिपासा एते च प्राणधर्मे। अन्योऽन्तर आत्मेति। प्राणमयादित्यर्थः। मनसीसि। मूर्च्छादाविति शेषः। प्राणप्रवृत्तेः मनोधीनत्वाच्च। तदुक्तं विवरणे—मनोधीनतादर्शनात्प्राणप्रवृत्तेरिति। अत उपजीव्यत्वात् मनस एव आत्मत्वं न तु प्राणस्य मनोधीनत्वानुपपत्तेः चेतनस्य जडाधीनप्रवृत्त्यभावात्। किंच प्राणस्य आत्मत्वे तत्समानयोगक्षेमत्वेन अपानादेरपि आत्मत्वप्रसङ्गः। तथा चानेकात्माधिष्ठितशरीरस्य युगपद्विरुद्धप्रवृत्तिप्रसङ्गेन उन्मथनं स्यात्। ततश्च प्राणस्य नात्मत्वं किन्तु एकस्य मनस एव। प्राणमय इति श्रुतिस्तु अन्नमय इति श्रुतिवद्व्याख्येया। अहं अशनायावानिति प्रत्ययस्तु बधिरोऽहमिति प्रत्ययवन्नेयः॥

[ १६—ग ]

बौद्धस्तु "अन्योऽन्तर आत्मा विज्ञानमय" इत्यादि-

श्रुतेः कर्त्तुरभावे करणस्य शक्त्यभावादहं कर्त्ता भोक्तेत्याद्यनुभवाच्च बुद्धिरात्मेति वदति । प्राभाकरतार्किकौ तु "अन्योऽन्तर आत्मानन्दमय" इत्यादिश्रुतेर्बुद्ध्यादीनामज्ञाने लयदर्शनादहमज्ञोऽहमज्ञानीत्याद्यनुभवाच्चाज्ञानमात्मेति वदतः ॥

अन्योऽन्तर आत्मेति। मनोमयादित्यर्थः। करणस्येति। सुखादिज्ञानकरणत्वेन हि मनो ऽनुमीयते ।अतः तत्करणं ततस्तदतिरिक्तः कर्त्ता वाच्यः, करणातिरिक्तस्य कर्त्तुर्दर्शनात्। यश्च कर्त्ता स आत्मा सा च बुद्धिरित्यर्थः ।प्राभाकरेति। यद्यपि गुरुभिः तार्किकैर्वा आत्मा नानन्दरुपत्वेन स्वीक्रियते तस्य सुखाश्रयत्वेन स्वीकारात्, नापी अज्ञानरुपत्वेन स्वीक्रियते ज्ञानाश्रयत्वेन स्वीकारात् ज्ञानाश्रयस्य च अज्ञानत्वायोगात् सिद्धान्ताभिमतस्य अज्ञानस्य तैरनङ्गीकाराच्च, तथापि तैर्न चिद्रूप आत्मा स्वीक्रियते, किन्तु ज्ञानाश्रयो जड़ः, तस्यानादित्वं च स्वीकुर्वन्ति । एवंभूतश्च वस्तुतः न आत्मा सत्यं

ज्ञानमित्यादिश्रुत्या तस्य चिद्रूपतया श्रवणात् । तस्मात्परस्य आत्मत्वेन अभिमतो यः अनादिसिद्धः जड़ः पदार्थः तद्वस्तुतो ज्ञानमेव तस्य जड़त्वे सति अनादित्वात् । अतः परेषामज्ञान एव आत्मत्वभ्रम इति भावः। बुद्धेरात्मत्वं दूषयति बुद्ध्यादीनामिति । यदा वै पुरुषः स्वपितीत्यादिश्रुतिष्विति शेषः । अहमज्ञ* इत्यनुभवः लयदर्शनादिति युक्तिः प्रज्ञानघनेति ज्ञानस्वरूप इत्यर्थः ॥

[ १९—घ ]

भाट्टस्तु "प्रज्ञानघन एवानन्दमय" इत्यादिश्रुतेः सुषुप्तौ प्रकाशाप्रकाशसद्भावान्मामहं न जानामीत्याद्यनुभवाच्चाज्ञानोपहितं चैतन्यमात्मेति वदति† । अपरो बौद्धः "असदेवेदमग्र आसीत्" इत्यादिश्रुतेः सुषुप्तौ सर्वाभावादहं सुषुप्तौ नासमित्युत्थितस्य स्वाभावपरामर्शविषयानुभवाच्च शून्यमात्मेति वदति ॥

---

* अहमज्ञ इत्यन्वाचयोक्तिरिति पुस्तकान्तरे पाठः । इत्यनुभवः लयदर्शनादिति युक्तिरिति पाठस्तत्र नास्ति ॥

† बौद्धैकदेशी कश्चिच्छ्रुत्यादिभिः शून्यमात्मेति वदतीति पुस्तकान्तरे पाठः॥

भाट्टैर्हि आत्मनः द्रव्यबोधात्मकत्वं स्वीक्रियते अतस्तेषामज्ञानोपहिते चैतन्ये एव आत्मत्वभ्रम इति भावः। द्रव्यबोधात्मकत्वे युक्तिमाह सुषुप्तावित्यादिना। अपरेति स्पष्टम्। श्रुतेश्च वस्तुतः अनभिव्यक्तनामरूपात्मनावस्थाने तात्पर्यं सदेव सौम्येदमग्र आसीदितिश्रुतेः असतः सज्जननायोगाच्चेति ध्येयम् ॥

[ २० ]

एतेषां पुत्रादीनामनात्मत्वमुच्यते । एतैरतिप्राकृतादिवादिभिरुक्तेषु श्रुतियुक्त्यनुभवाभासेषु पूर्वपूर्वोक्तश्रुतियुक्त्यनुभवाभासानामुत्तरोत्तरश्रुतियुक्त्यनुभवाभासैरात्मत्वबाधदर्शनात्पुत्रादीनामनात्मत्वं स्पष्टमेव । किञ्च प्रत्यगस्थूलोऽचक्षुरप्राणोऽमना अकर्त्ता चैतन्यं चिन्मात्रं सदित्यादिप्रबलश्रुतिविरोधादस्य पुत्रादिशून्यपर्यन्तस्य जडस्य चैतन्यभास्यत्वेन घटादिवदनित्यत्वादहं ब्रह्मेति विद्वदनुभवप्राबल्याच्च तत्तच्छ्रुतियुक्त्यनुभवाभासानां बाधितत्वादपि पुत्रादिशून्यपर्यन्तमखिलमनात्मैव।

अतस्तत्तद्भासकं नित्यशुद्धबुद्धमुक्तसत्यस्वभावं प्रत्यक्चैतन्यमेवात्मवस्त्विति वेदान्तविद्वदनुभवः। एवमध्यारोपः॥

विशेषाध्यारोपं प्रदर्श्य तस्यारोपत्वं दर्शयति एतेषामिति। उत्तरश्रुतियुक्त्यनुभवाभासैः पूर्वश्रुतियुक्त्यनुभवाभासानां बाधनात् पुत्रादीनामनात्मत्वमित्युक्त्या प्रकारान्तरेण पुत्रादीनामनात्मत्वमाह किंचेति। प्रत्यक्पदेन पुत्रस्यानात्मत्वमुच्यते तस्य पराक्त्वात् अचक्षुःपदेन चेन्द्रियाणामनात्मत्वम्। अकर्तृपदेन च बुद्धेः चैतन्यपदेन जडस्याज्ञानस्य चिन्मात्रमिति द्रव्यबोधात्मकस्यानात्मत्वमुच्यते। प्रत्यगस्थूलाद्यात्मना हि आत्मा श्रुत्या उच्यते। पुत्रादीनामात्मत्वे तद्विरुद्धमित्यर्थः। प्रबलेति। उपक्रमोपसंहारादिना प्राबल्यनिश्चयादित्यर्थः। अस्येति। तथा च विमतं नात्मा चिद्भास्यत्वात् घटवदित्यनुमानमुक्तं भवति। पुत्रादीनामनात्मत्वे प्रत्यक्षमप्याह अहमिति। अत इति। तथा च तत्तद्वादिनां पुत्राद्यात्मत्वोक्तिः आरोपमात्रमित्यर्थः।

शुद्धपदेन संसारराहित्यमुच्यते। तत्र संसारराहित्यं न मुक्तिदशायामेव किन्तु सर्वदेत्याह मुक्तेति। विमुक्तश्च विमुच्यत इति श्रुतेरित्यर्थः। बुद्धपदेन स्वप्रकाशत्वमुच्यते। दीपसाधारण्यं निराकरोति चैतन्यमिति॥

[ २१ ]

अपवादो नाम रज्जुविवर्त्तस्य सर्पस्य रज्जुमात्रत्ववद्वस्तुविवर्त्तस्यावस्तुनोऽज्ञानादेः प्रपञ्चस्य वस्तुमात्रत्वम्। तदुक्तम्

"सतत्त्वतोऽन्यथाप्रथा विकार इत्युदीरितः।
अतत्त्वतोऽन्यथाप्रथा विवर्त्त इत्युदीरित" इति॥

तथाहि। एतद्भोगायतनं चतुर्विधसकलस्थूलशरीरजातं भोग्यरूपान्नपानादिकमेतदायतनभूतभूरादिचतुर्दशभुवनान्येतदायतनभूतं ब्रह्माण्डं चैतत्सर्वमेतेषां कारणरूपं पञ्चीकृतभूतमात्रं भवति। एतानि शब्दादिविषयसहितानि पञ्चीकृतानि भूतानि सूक्ष्मशरीरजातं चैतत्सर्वमेतेषां कारणरूपापञ्चीकृतभूतमात्रं भवति। एतानि सत्त्वादिगुणसहितान्यपञ्चीकृतान्युत्पत्तिव्युत्क्रमेणैतत्का-

रणभूताज्ञानोपहितचैतन्यमात्रं भवति। एतदज्ञानमज्ञा-
नोपहितं चैतन्यं चेश्वरादिकमेतदाधारभूतानुपहितचैत-
न्यरूपं तुरीयं ब्रह्ममात्रं भवति ॥

इदानीमपवादं निरूपयति **अपवादो नामेति** । संगतिश्च हेतुहेतुमद्भावलक्षणा बोध्या । अवस्तुभूतस्य वस्त्वात्मना उपदेशः अपवाद इत्यर्थः । **एतत्सर्वमिति** । यथा घटः मृत्स्वरूपः तत्कार्यत्वात् तथा एतादित्यर्थः । **व्युत्क्रमेणेति** । पृथिवी जलमात्रं जलं तेजोमात्रं तेजो वायुमात्रं वायुराकाशमात्र-मित्यर्थः । तदुक्तं विपर्ययेण तु क्रम उपपद्यते चेति । "जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते । ज्योतिष्याप: प्रलीयन्ते ज्योतिर्वायौ प्रलीयते" । 'वायुर्व्योम्नीति चेति' । **अज्ञानोपहितेति** । अज्ञानविषयतोपहितं चैतन्यमात्रमित्यर्थः । **एतदाधारभूतेति** । एतदधिष्ठानभूतेत्यर्थः ॥

[ २२ ]

**आभ्यामध्यारोपापवादाभ्यां तत्त्वम्पदार्थशोधनमपि**

सिद्धं भवति। तथा हि। अज्ञानादिसमष्टिरेतदुपहितं सर्वज्ञत्वादिविशिष्टं चैतन्यमेतदनुपहितं चैतन्नयं तप्तायःपिण्डवदेकत्वेनावभासमानं तत्पदवाच्यार्थो भवति। एतदुपाध्युपहिताधारभूतमनुपहितं चैतन्यं तत्पदलक्ष्यार्थो भवति। अज्ञानादिव्यष्टिरेतदुपहितात्पज्ञत्वादिविशिष्टचैतन्यमेतदनुपहितं चैतन्नयं तप्तायःपिण्डवदेकत्वेनावभासमानं त्वम्पदवाच्यार्थो भवति। एतदुपाध्युपहिताधारभूतमनुपहितं प्रत्यगानन्दं तुरीयं चैतन्यं त्वम्पदलक्ष्यार्थो भवति॥

अध्यारोपापवादनिरूपणप्रयोजनमाह आभ्यामिति। अज्ञानादिसमष्टिरिति। अज्ञानम् आदिः निरूपकं यस्याः सा समष्टिः विषयतेत्यर्थः। यत्तु आदिना लिङ्गशरीरसमष्टिः उच्यत इति। तन्न। तदुपहितस्य हिरण्यगर्भस्य जीवत्वात् त्वंपदवाच्यत्वेन तत्पदवाच्यत्वाभावात्। सर्वज्ञत्वादीत्यत्रादिशब्देन सर्वनियन्तृत्वादि उच्यते। चैतन्यमिति। ईश्वरचैतन्यमित्यर्थः। तस्य तत्पदवाच्यत्वात्। अज्ञानादिव्यष्टिरित्यत्र आदिशब्देन व्यावहा-

रिकजीवोपाधिलिङ्गशरीरमुच्यते । तदुपहितस्यापि त्वंपदवाच्यत्वात् ॥

[ २३—क ]

अथ महावाक्यार्थो वर्ण्यते । इदं तत्त्वमसिवाक्यं सम्बन्धत्रयेणाखण्डार्थबोधकं भवति । सम्बन्धत्रयं नाम पदयोः सामानाधिकरण्यं पदार्थयोर्विशेषणविशेष्यभावः प्रत्यगात्मलक्षणयोर्लक्ष्यलक्षणभावश्चेति । तदुक्तम्—

"सामानाधिकरण्यं च विशेषणविशेष्यता ।
लक्ष्यलक्षणसम्बन्धः पदार्थप्रत्यगात्मनामिति" ॥

सामानाधिकरण्यसम्बन्धस्तावद्यथा सोऽयं देवदत्त इत्यस्मिन्वाक्ये तत्कालविशिष्टदेवदत्तवाचकसशब्दस्यैतत्कालविशिष्टदेवदत्तवाचकायंशब्दस्य चैकस्मिन्पिण्डे तात्पर्यसम्बन्धः । तथा च तत्त्वमसीति वाक्येऽपि परोक्षत्वादिविशिष्टचैतन्यवाचकतत्पदस्यापरोक्षत्वादिविशिष्टचैतन्यवाचकत्वम्पदस्य चैकस्मिंश्चैतन्यं तात्पर्यसम्बन्धः ॥

पदार्थनिरूपणानन्तरं वाक्यार्थं निरूपयति अथेति । अत्र वाक्यं द्विविधं संसृष्टार्थमखण्डार्थं चेति । तत्र संसृष्टार्थं

संसर्गगोचरप्रमितिजनकं यथा गामानयेत्यादि । अखण्डार्थं तु संसर्गागोचरप्रमितिजनकं यथा प्रकृष्टप्रकाशश्चन्द्र इत्यादि । तथा हि अस्मिन् ज्योतिर्मण्डले कतमश्चन्द्र इति चन्द्रस्वरूपमात्रविवक्षया प्रश्ने कश्चिदाह यः प्रकृष्टप्रकाशः स चन्द्र इति । तथा चेदं वाक्यं चन्द्रस्वरूपमात्रमेव बोधयति न तु संसर्गं प्रश्नप्रतिवचनयोर्वैरूप्यापत्तेः । सोयं देवदत्त इत्यपि वाक्यम् अखण्डार्थम् एवं तत्त्वमसिवाक्यमपि स्वरूपमात्रविवक्षया प्रयुक्तत्वात् अखण्डार्थमित्याह । इदमिति । अखण्डार्थबोधकमिति । संसर्गागोचरप्रमितिविषयबोधकमित्यर्थः । प्रत्यगात्मलक्षणयोरित्यत्र लक्षणपदेन लक्षकमुच्यते । पदाथात । पदार्थौ च प्रत्यगात्मा च तेषामित्यर्थः यद्वा पदं चार्थश्च प्रसङ्गात्मा चेत्यर्थः अर्थश्च वाच्यः । सामानाधिकरण्येति । समानविभक्त्यन्तयोः पदयोरेकस्मिन्नर्थे तात्पर्यं सामानाधिकरण्यमित्यर्थः । 'अभिधेयाविनाभूते प्रवृत्तिर्लक्षणेष्यते' शक्यसम्बन्धो लक्षणेत्येतन्मतद्वयाभिप्रायेण तत्त्वपदयोस्तदर्थयोर्वेत्युक्तमिति मन्तव्यम् ॥

[ २३—ख ]

विशेषणविशेष्यभावसम्बन्धस्तु यथा तत्रैव वाक्ये सशब्दार्थतत्कालविशिष्टदेवदत्तस्यायंशब्दार्थैतत्कालविशिष्टदेवदत्तस्य चान्योन्यभेदव्यावर्त्तकतया विशेषणविशेष्यभावः। तथात्रापि वाक्ये तत्पदार्थपरोक्षत्वादिविशिष्टचैतन्यस्य त्वम्पदार्थापरोक्षत्वादिविशिष्टचैतन्यस्य चान्योन्यभेदव्यावर्त्तकतया विशेषणविशेष्यभावः। लक्ष्यलक्षणसम्बन्धस्तु यथा तत्रैव संशब्दायंशब्दयोस्तदर्थयोर्वा विरुद्धतत्कालैतत्कालविशिष्टत्वपरित्यागेनाविरुद्धदेवदत्तेन सह लक्ष्यलत्तणभावः। तथात्रापि वाक्ये तत्त्वम्पदार्थयोस्तदर्थयोर्वा विरुद्धपरोत्तत्वापरोक्षत्वादिविशिष्टत्वपरित्यागेनाविरुद्धचैतन्येन सह लक्ष्यलक्षणभावः। इयमेव भागलक्षणेत्युच्यते॥

[ २४ ]

अस्मिन्वाक्ये नीलमुत्पलमिति वाक्यवद्वाक्यार्थो न सङ्गच्छते। तत्र तु नीलपदार्थनीलगुणस्योत्पलपदार्थोत्पलद्रव्यस्य च शौक्ल्यपटादिभेदव्यावर्त्तकतयान्योन्यविशेषणविशेष्यभावसंसर्गस्यान्यतरविशिष्टस्यान्यतरस्य तदैक्यस्य वा वाक्यार्थत्वाङ्गीकारे प्रमाणान्तरविरोधा-

भावात्तद्वाक्यार्थः सङ्गच्छते। अत्र तु तदर्थपरोक्षत्वादि-विशिष्टचैतन्यस्य त्वमर्थापरोक्षत्वादिविशिष्टचैतन्यस्य चान्योन्यभेदव्यावर्त्तकतया विशेषणविशेष्यभावसंसर्गस्यान्यतरविशिष्टस्यान्यतरस्य तदैक्यस्य च वाक्यार्थत्वाङ्गीकारे प्रत्यक्षादिप्रमाणविरोधाद्वाक्यार्थो न सङ्गच्छते तदुक्तं—

"संसर्गो वा विशिष्टो वा वाक्यार्थो नात्र सम्मतः।
अखण्डैकरसत्वेन वाक्यार्थो विदुषां मत" इति॥

भागलक्षणां समर्थयितुं प्रकारान्तरं व्युदस्यति अस्मिन्नित्यादिना। प्रत्यक्षादीति। ननु यदि ईश्वरः प्रत्यक्षः स्यात् तदा जीवेश्वरयोर्भेदः प्रत्यक्षसिद्ध इति तयोरभेदलक्षणो वाक्यार्थो न सङ्गच्छते प्रत्यक्षविरोधादिति वाच्यम्। न चैतत् ईश्वरस्याप्रत्यक्षत्वादिति चेत्। न। जीवस्तावत्प्रत्यक्ष एव ईश्वरस्तु यद्यपि न प्रत्यक्षः तथापि तर्कितं यत्सत्वं यदनुपलम्भविरोधि तदभावः प्रत्यक्षः इति न्यायेन वायौ रूपवदन्योन्याभाववत् घटे परमाण्वन्योन्याभाववद्वा जीवेश्वरभेदः प्रत्यक्ष एव। यद्यहमीश्वरः

तदा किञ्चित्ज्ञत्वाद्युपलम्भो न स्यात् न स्याच सर्वज्ञत्वाद्यनुपलम्भ इति प्रकृतेपि तर्कसम्भवात्। तस्माद्भेदस्य प्रत्यक्षत्वाद्युक्तमुक्तं प्रत्यक्षादिप्रमाणविरोधादिति। प्रत्यक्षपदं च योग्यानुपलब्धिपरं द्रष्टव्यम्। यद्वा परोक्षत्वादिविशिष्टचैतन्यस्य जीवाभेदे जीवस्य परोक्षत्वादि स्यात् तथा चापरोक्षत्वादिबोधकप्रत्यक्षादिप्रमाणविरोधः। अन्ये तु प्रत्यक्षम् आदिर्यस्येत्यतद्गुणसंविज्ञानबहुव्रीहिणा अनुमानादिकमेव उक्तमित्याहुः। तन्न। अतद्गुणसंविज्ञानतः तद्गुणसंविज्ञानस्य समीचीनत्वात्। किं च यत्र विशेष्यैकदेशः विशेषणत्वेन सम्बध्यते स तद्गुणसंविज्ञानः यथा लम्बकर्ण इत्यादौ। यत्र च न स सम्बध्यते किन्तु अन्य एव विशेषणत्वेन सम्बध्यते स अतद्गुणः यथा बहुधन इत्यादि। एवं च प्रकृते प्रमाणस्य विशेष्यत्वात् तदेकदेशस्य च प्रत्यक्षस्य विशेषणत्वेन सम्बन्धात्तद्गुण एवायं न त्वतदगुणः, न च यत्र विशेषणं क्रियान्वयि स तद्गुणः। यत्र च विशेषणं न तथा स अतद्गुणः। एवं चात्र विशेषणस्य प्रत्यक्षस्य क्रियानन्वयात् अ-

तद्गुणबहुव्रीहिरेवायमिति वाच्यम् । विशेषणस्य क्रियान्वयित्वेन तद्गुणत्वे लम्बकर्णाय देहीत्यादौ कर्णविशेषणस्य दानानन्वयेन तद्गुणबहुव्रीहित्वं न स्यात् । बहुधन आस्ते इत्यादौ धनस्यापि अस्तिक्रियान्वयेन तद्गुणबहुव्रीहित्वमेव स्यात् । न स्याच्चातद्गुणत्वमिति । न चेष्टापत्तिः। तथा व्यवहाराभावात् । तस्माद्यत्र विशेष्यैकदेशः विशेषणत्वेन संबध्यते स तद्गुणसंविज्ञान इत्येव लक्षणम् । अत एव द्वितीयसूत्रे जन्म आदिर्यस्येति तद्गुण इति भाष्यटीकाव्याख्यानावसरे विवरणाचार्यैः विशेष्यैकदेशमेव विशेषणं कृत्वा समास इत्युक्तम् । उक्तरीत्या प्रत्यक्षस्यापि विरोधक्रियान्वयेन अतद्गुणबहुव्रीहित्वानुपपत्तेश्चेति दिक् । तत्त्वमसिवाक्ये नीलमुत्पलमित्यादिवाक्यवत् न सामानाधिकरण्यं, गुणगुणिभावाद्यसंभवाच्चेत्यपि द्रष्टव्यम् ॥

[ २५ ]

अत्र तु गङ्गायां घोषः प्रतिवसतीतिवाक्यवज्जहल्लक्षणापि न सङ्गच्छते । तत्र तु गङ्गाघोषयोराधाराधेयभाव-

लक्षणस्य वाक्यार्थस्याशेषतो विरुद्धत्वाद्वाक्यार्थमशेषतः परित्यज्य तत्सम्बन्धितीरलक्षणाया युक्तत्वाज्जहल्लक्षणा सङ्गच्छते। अत्र तु परोक्षापरोक्षचैतन्यैकत्वलक्षणस्य वाक्यार्थस्य भागमात्रे विरोधाद्भागान्तरमपि परित्यज्यान्यलक्षणाया अयुक्तत्वाज्जहल्लक्षणा न सङ्गच्छते। न च गङ्गापदं स्वार्थपरित्यागेन तीरपदार्थं यथा लक्षयति तथा तत्पदं त्वम्पदं वा स्वार्थपरित्यागेन त्वम्पदार्थं तत्पदार्थं वा लक्षयत्वतः कुतो जहल्लक्षणा न सङ्गच्छत इति वाच्यम्। तत्र तीरपदाश्रवणेन तदर्थाप्रतीतौ लक्षणया तत्प्रतीत्यपेक्षायामपि तत्त्वम्पदयोः श्रूयमाणत्वेन तदर्थप्रतीतौ लक्षणया पुनरन्यतरपदेनान्यतरपदार्थप्रतीत्यपेक्षाभावात्॥

भागान्तरमपीति। वैशिष्ट्यांशमित्यर्थः। अन्येति। जहदजहल्लक्षणाया इत्यर्थः। तत्रेपतस्त्वार्थागमनादिति भावः॥

[ २६ ]

अत्र शोणो धावतीति वाक्यवदजहल्लक्षणापि न सम्भवति। तत्र शोणगुणगमनलक्षणस्य वाक्यार्थस्य विरुद्धत्वात्तदपरित्यागेन तदाश्रयाश्वादिलक्षणया तद्वि-

रोधपरिहारसम्भवादजहल्लक्षणा सम्भवति । अत्र तु परोक्षत्वापरोक्षत्वादिविशिष्टचैतन्यैकत्वस्य वाक्यार्थस्य विरुद्धत्वात्तदपरित्यागेन तत्सम्बन्धिनो यस्यकस्यचिदर्थस्य लक्षितत्वेऽपि तद्विरोधपरिहारासम्भवादजहल्लक्षणा न सम्भवत्येव । न च तत्पदं त्वम्पदं वा स्वार्थविरुद्धांशपरित्यागेनांशान्तरसहितं तत्पदार्थं त्वम्पदार्थं वा लक्षयतु। अतः कथं प्रकारान्तरेण भागलक्षणाङ्गीकरणमिति वाच्यम् । एकेन पदेन स्वार्थांशपरित्यागपदार्थान्तरस्वीकारोभयलक्षणाया असम्भवात्। पदान्तरेण तदर्थप्रतीतौ लक्षणया पुनस्तत्प्रतीत्यपेक्षाभावाच्च ॥

तदाश्रयेति। शोणगुणाश्रयेत्यर्थः । विरुद्धत्वादिति। विशिष्टयोरभेदे विशेषणयोरपि अभेदः स्यात् । विशिष्टे अन्वितस्य विशेषणेप्यन्वयादित्यर्थ इत्याहुः । उक्तविस्मरणशीलः शङ्कते न चेति । शुद्धं चैतन्यम् अंशान्तरम्। प्रकारान्तरेणेति। पदद्वयेनापि शुद्धचैतन्यलक्षणैव कुतः पदार्थान्तरलक्षणैव किं न स्यादित्यर्थः । एकेनेति । यद्यपि शोणो धावतीत्यत्र यथा शोणपदं स्वार्थं पदार्थान्तरं वाऽश्वादिलक्षणं

लक्षणया उपस्थापयति एवं तत्पदादेरपि स्वार्थांशपदार्थान्तरोभयलक्षकत्वेन बाधकं तथापि उभयलक्षणायां गौरवाच्चैतन्यलक्षणैव युक्तेति भावः। यत्तु भागलक्षणायां गौरवादजहल्लक्षणैवास्त्वियति शङ्क्ते न चेति; अजहल्लक्षणायां शक्यलक्ष्यसाधारण एको धर्मो वक्तव्यः, काकेभ्यो दधि रक्षतामित्यत्र शक्याशक्यसाधारणदध्युपघातकत्वरूपधर्मदर्शनात्; न च प्रकृते स्वार्थांशपदार्थान्तरसाधारण एकधर्मोस्ति; ततः नाजहल्लक्षणा इत्यभिप्रायेण एकेनेत्युक्तमिति। तन्न। भागलक्षणाक्षेपे प्रकारान्तरेणेत्येतद्व्यर्थम्। अतः कथं भागलक्षणेत्येव वक्तव्यम्। एकेन पदेनेत्यस्य वैय्यर्थ्यापत्तेश्च। शक्याशक्यसाधारणधर्मभागस्यैवाजहल्लक्षणादूषकत्वात्। किंच शक्याशक्यसाधारणधर्म्मस्यैव अजहल्लक्षणाप्रयोजकत्वे शोणो धावतीत्यत्र अजहल्लक्षणा न स्यात्, शक्याशक्यसाधारणैकधर्माभावात्। न चेष्टापत्तिः, पूर्वमुक्तत्वात् ग्रन्थान्तरेप्युक्तत्वाच्च। तस्मान्न शक्याशक्यसाधारणो धर्मः अज-

हल्लक्षणायां प्रयोजकः किंतु सर्वथा स्वार्थपरित्याग एव। अत एव जिज्ञासासूत्रे अजहल्लक्षणैव। स्वार्थस्य ज्ञानेच्छारूपस्य ब्रह्मज्ञानफलकविचारलक्षणायामपरित्यागात्। फलत्वं च इष्यमाणत्वमिति इच्छाया अपि लाक्षणिके बोधे उपस्थितिरस्त्येव। ननु शक्त्युपस्थितस्य लक्षणयाप्युपस्थितौ युगपद्वृत्तिद्वयविरोधः स्यादिति चेत्। न। उपस्थित्यन्तराङ्गीकारात्। अन्यथा शोणो धावतीत्यत्रापि लक्षणया शोणगुणस्य उपस्थितिर्न स्यादिति॥

[ २७ ]

तस्माद्यथा सोऽयं देवदत्त इति वाक्यं तदर्थो वा तत्कालैतत्कालविशिष्टदेवदत्तलक्षणस्य वाक्यार्थस्यांशे विरोधाद्विरुद्धतत्कालैतत्कालविशिष्टांशं परित्यज्याविरुद्धं देवदत्तांशमात्रं लक्षयति तथा तत्त्वमसीतिवाक्यं तदर्थो वा परोक्षत्वापरोक्षत्वादिविशिष्टचैतन्यैकत्वलक्षणस्य वाक्यार्थस्यांशे विरोधाद्विरुद्धपरोक्षत्वापरोक्षत्वादिविशिष्टांशं परित्यज्याविरुद्धमखण्डचैतन्यमात्रं लक्षयतीति॥

एवं च तत्त्वमसीति वाक्ये जहदजहल्लक्षणैवेत्युपसंहरति **तस्मादिति । वाक्यमिति** । पदद्वयमित्यर्थः । यथा सोऽयं देवदत्त इति वाक्यं देवदत्तस्वरूपमात्रं लक्षयति तथा तत्त्वमसिवाक्यं चैतन्यमात्रं लक्षयतीत्यन्वयः । **चैतन्यमात्रमिति** । ननु किमर्थं लक्षणा । विशिष्टयोरभेदायोगादिति चेत् । तर्हि वैशिष्ट्यांशत्यागेन शक्तिजन्योपस्थितिविशेष्ययोरेव अभेदो भासतां । यत्र हि शक्तिजन्योपस्थितिविशेष्ययोरन्वयासंभवस्तत्र लक्षणाश्रीयते, यथा गङ्गायां घोष इत्यादौ । प्रकृते च वैशिष्ट्यांशत्यागेन शक्तिजन्योपस्थितिविशेष्ययोरेव अभेदान्वयः संभवतीति किं लक्षणयेति चेत् अत्राहुः स्वरूपमात्रविवक्षया प्रयुक्तत्वात् । तत्त्वमसीति वाक्यं तावदखण्डार्थम् । अखण्डार्थं च तदेव यत्संसर्गागोचरप्रमितिजनकं । शक्तिजन्योपस्थितिविशेष्ययोश्च भासमानो ऽभेदः संसर्गविधयैव भायात् । एवं चाखण्डार्थत्वव्याघातः । तस्मादखण्डार्थत्वप्रसिद्ध्यर्थं शक्तिजन्योपस्थितिं

त्यक्त्वा शुद्धचैतन्योपस्थित्यर्थं लक्षणा अवश्यमङ्गीकर्तव्येति। सा चेयं लक्षणा पदद्वयेपि। न च एकेनैव पदेन लक्षणया चैतन्योपस्थितौ पदान्तरवैयर्थ्यं। पदस्याप्रमाणत्वेन वाक्यत्वसिद्ध्यर्थं पदान्तरस्याप्यावश्यकत्वादिति॥

[ २८ ]

अथाधुनाहं ब्रह्मास्मीत्यनुभववाक्यार्थो वर्ण्यते। एवमाचार्येणाध्यारोपापवादपुरःसरं तत्त्वम्पदार्थौ शोधयित्वा वाक्येनाखण्डार्थेऽवबोधितेऽधिकारिणोऽहं नित्यशुद्धबुद्धमुक्तसत्यस्वभावपरमानन्दानन्ताद्वयं ब्रह्मास्मीत्यखण्डाकाराकारिता चित्तवृत्तिरुदेति। सा तु चित्प्रतिबिम्बसहिता सती प्रत्यगभिन्नम् अज्ञातं परं ब्रह्म विषयीकृत्य तद्गताज्ञानमेव बाधते तदा पटकारणतन्तुदाहे पटदाहवदखिलकारणेऽज्ञाने बाधिते सति तत्कार्यस्याखिलस्य बाधितत्वात्तदन्तर्भूताखण्डाकाराकारिता चित्तवृत्तिरपि बाधिता भवति। तत्र प्रतिबिम्बितं चैतन्यमपि यथा दीपप्रभादित्यप्रभावभासनासमर्था सती तयाभिभूता भवति तथा स्वयम्प्रकाशमानप्रत्यगभिन्नपरब्रह्मा-

वभासनानर्हतया तेनाभिभूतं सत्स्वोपाधिभूताखण्डवृत्ते-र्बाधितत्वाद्दर्पणाभावे मुखप्रतिबिम्बस्य मुखमात्रत्ववत्प्र-त्यगभिन्नपरब्रह्ममात्रं भवति ॥

अनुभववाक्येति। अनुभवस्य ब्रह्मतत्वसाक्षात्कारस्य प्रतिपादकं यद्वाक्यं तस्येत्यर्थः । यद्यपि एतस्यापि वाक्यस्य अखण्डार्थत्वेन तत्वमसिवाक्यान्न स्वतन्त्रो ऽर्थोऽस्ति तथापि शक्त्या प्रतीयमानो ऽर्थोऽत्र प्रतिपाद्यत इति ध्येयम् । अन-न्तशब्देन व्यापकत्वमुच्यते । अखण्डाकाराकारितेति । अख-ण्डाकारगोचरेत्यर्थः । उदेतीति । सा एतद्वाक्यस्य शक्योर्थ इति शेषः । वृत्तेः प्रयोजनमाह सा त्विति । अज्ञानमेवेत्यत्र एवकारेण चैतन्यस्फोरकत्वं वृत्तेर्व्यावर्त्यते । ननु अज्ञाननिव-र्त्तकवृत्तिनिवृत्त्यर्थं वृत्त्यन्तरमपेक्षणीयं न वा । आद्ये अनवस्था । अन्त्ये तन्निवर्तकाभावेन तस्या सत्वात्तयैव सद्वितीयत्वं । तत्राह तदेति । अज्ञाननिवर्तिका वृत्तिः स्वस्यापि बाधिका कतक-रजन्यायेनेति भावः । वृत्त्या अज्ञानमात्रं निवर्त्यते न चैतन्यं स्फोर्यत इत्युक्तम् ॥

[ २६ ]

एवं च सति "मनसैवानुद्रष्टव्यं" "यन्मनसा न मनुत" इत्यनयोः श्रुत्योरविरोधो वृत्तिव्याप्यत्वाङ्गीकारेण फलव्याप्यत्वप्रतिषेधप्रतिपादनात् । तदुक्तं—

"फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितम् ।
ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता" इति ॥

"स्वयम्प्रकाशमानत्वान्नाभास उपयुज्यत" इति च ॥ जडपदार्थाकाराकारितचित्तवृत्तेर्विशेषोऽस्ति । तथा हि— अयं घट इति घटाकाराकारितचित्तवृत्तिरज्ञातं घटं विषयीकृत्य तद्गताज्ञाननिरसनपुरःसरं स्वगतचिदाभासेन जडं घटमपि भासयति । तदुक्तं—

"बुद्धितत्स्थचिदाभासौ द्वावपि व्याप्नुतो घटम् ।
तत्राज्ञानं धिया नश्येदाभासेन घटः स्फुरेत्" इति ॥

यथा दीपप्रभामण्डलमन्धकारगतं घटपटादिकं विषयीकृत्य तद्गतान्धकारनिरसनपुरःसरं स्वप्रभया तदपि भासयतीति ॥

तदुपपादनफलमाह एवमिति । विषये अभिव्यक्तं चैतन्यं फलं चैतन्ये च न चैतन्याभिव्यक्तिः आत्माश्रयात् स्वयंप्रकाश-

त्वाच्चेति भावः। अस्येति। चैतन्यस्येत्यर्थः । आभासः फलम् वृत्तिप्रतिविम्बितं चैतन्यम्। उपयुज्यत इति। शुद्धचैतन्यस्फोरणे इत्यर्थः।घटमिति। घटावच्छिन्नं चैतन्यमित्यर्थः। अज्ञानस्य चैतन्यविषयत्वेन वृत्तेरपि चैतन्यविषयत्वात् ज्ञानाज्ञानयोः समानविषयत्वनियमात्। अज्ञानस्य च चैतन्यविषयत्वम् उपपादितमधस्तात्। अज्ञानेति। एतच्च तूलाज्ञानपक्षे। तथा हि घटं न जानामीति प्रतीतिस्तावत् चतुर्धा व्याख्याता विवरणे वृत्यभावविषयत्वेन आवरणसंसर्गविषयत्वेन आवरणान्तरविषयत्वेन तूलाज्ञानविषयत्वेन च। तत्र यदा घटं न जानामीति प्रतीतेः वृत्त्यभावविषयत्वं तदा अखण्डचैतन्यविषयकमूलाज्ञानातिरिक्तमज्ञा*नान्तरमस्ति।रजतन्तु शुक्तिवृत्त्यभावोपलक्षितान्मूलाज्ञानादेव उत्पद्यते ।वृत्त्या तु रजतमात्रं निवर्त्तते नाज्ञानं,तस्य अखण्डचैतन्याविषयवृत्तिनिवर्त्यत्वात्। तदुक्तं स्वकारणे प्रविलयमात्रं क्रियत इति। यदापि अनिर्वचनीयमूलावरणसंसर्गविषयमादाय घटं न जानामीति प्रतीतिव्या-

*—मज्ञानंनास्ति इति पुस्तकान्तरे पाठः ।

ख्यानं तदापि नाज्ञाननिवृत्तिः। तथा हि अज्ञानं तावच्चिन्मात्रविषयम् अतस्तदावरणं चिन्मात्रनिष्ठमिति ईश्वरेऽपि मूलावरणम् अध्यस्तमिति वक्तव्यम्। ईश्वरे घटादयो ऽप्यध्यस्ताः तस्य सर्वज्ञत्वात्। अतः घटावरणयोरेकत्राध्यासात् आवरणस्यानिर्वचनीयसंसर्गः घटे उत्पद्यते। तं च संसर्गमादाय घटं न जानामीतिप्रतीतिः यथा एकस्मिन्स्फटिकाचले प्रतिबिम्बितयोर्लौहित्यमुखयोर्लोहितं मुखमिति परस्परसंसर्गो ऽवभासते तद्वत्, तदुक्तं विषयैः सह अज्ञानस्य साक्षिचैतन्ये अध्यासात्प्रतिभास इति अज्ञानस्य अज्ञानावरणस्य साक्षिचैतन्ये ईश्वरचैतन्ये अध्यासात्प्रतिभासः घटं न जानामीति प्रतिभास इत्यर्थः। एवं चाज्ञानस्य चिन्मात्रविषयत्वेऽपि अनिर्वचनीयावरणसंसर्गमादाय घटस्याप्यज्ञानविषयत्वाद्युक्तैव घटं न जानामीति प्रतीतिः। रजतन्तु शुक्तौ जनितावरणसंसर्गान्मूलज्ञानादेव उत्पद्यते, वृत्त्या तु आवरणसंसर्गमात्रनिवृत्तिः, नाज्ञाननिवृत्तिः, तस्य ब्रह्मज्ञाननिवर्त्यत्वात्। यदापि घटं न जानामीति प्रतीतिं व्याख्यातुं चिन्मात्रनिष्ठावर-

णातिरिक्तं परिच्छिन्नं घटे आवरणं स्वीक्रियते तदापि वृत्त्या आवरणमात्रनिवृत्तिः, नाज्ञाननिवृत्तिः, उक्तहेतोः। यदा तु सविलासाऽज्ञाननिवृत्तिर्बाधः अज्ञाननिवर्त्तकज्ञानं प्रमाणम् इत्यादिव्यवहारसौकर्यार्थं तूलाज्ञानं स्वीक्रियते तदा तु तदेव घटं न जानामीतिप्रतीतेर्विषयः। तस्मादेव च रजतमुत्पद्यते। वृत्त्या तु सकार्यस्य तस्य निवृत्तिः क्रियते ततश्च तूलाज्ञानपक्षे एवाज्ञाननिवृत्तिः। तस्माद्युक्तमुक्तम् एतच्च तूलाज्ञानपक्ष इति। चिदाभासेनेति। केवलायाः वृत्तेर्जडत्वेन अभासकत्वादिति भावः ॥

[ ३०—क ]

एवंभूतस्वस्वरूपचैतन्यसाक्षात्कारपर्यन्तं श्रवणमनननिदिध्यासनसमाध्यनुष्ठानस्यापेक्षितत्वात्तेऽपि प्रदर्श्यन्ते। श्रवणं नाम षड्विधलिङ्गैरशेषवेदान्तानामद्वितीयवस्तुनि तात्पर्यावधारणम्। लिङ्गानि तूपक्रमोपसंहाराभ्यासापूर्वताफलार्थवादोपपत्त्याख्यानि। प्रकरणप्रतिपाद्यस्यार्थस्य तदाद्यन्तयोरुपपादनमुपक्रमोपसंहारौ। यथा छान्दोग्ये षष्ठाध्याये प्रकरणप्रतिपाद्यस्याद्वितीयवस्तुन "एकमेवाद्वितीयम्" इत्यादौ "ऐतदात्म्यमिदं सर्वम्" इत्यन्ते

च प्रतिपादनम् । प्रकरणप्रतिपाद्यस्य वस्तुनस्तन्मध्ये पौनःपुन्येन प्रतिपादनमभ्यासः ॥

तात्पर्यावधारणमिति। तात्पर्यावधारणानुकूलो विचार इत्यर्थः। अवधारणस्यैव श्रवणत्वे श्रवणविधिविधेयत्वं न स्यात्, सिद्धान्ते ज्ञाने विध्यभावात्। ननु श्रोतव्य इति श्रवणविधिः स्यात् सिद्धान्ते ज्ञाने विध्यभावात् अवधारणस्य च ज्ञानत्वात्। ननु श्रोतव्य इति श्रवणविधिः तेन च न श्रवणं विधातुं शक्यते। उपक्रमोपसंहारादिपर्यालोचनया तस्यात्मपरत्वावगमात्। अतः श्रवणस्याविधेयत्वान्नोक्त दोष इति चेत्। न। श्रोतव्य इति वाक्येन श्रवणस्य अविधेयत्वेपि श्रवणे आर्थिकविध्यङ्गीकारात्। अन्यथा श्रवणे प्रवृत्तिर्न स्यात्। अन्ये पुनराचार्याः श्रोतव्य इति वाक्येनैव श्रवणं विधीयते। उपक्रमोपसंहारादिपर्यालोचनया आत्मपरतावगमेपि अवान्तरतात्पर्येण श्रवणपरत्वात्, यथा विविदिषन्तीतिवाक्यम् आत्मपरमपि अवान्तरतात्पर्येण यज्ञादि विधत्ते तद्वदित्याहुः। एवं च श्रवणस्य अवधारणरूपत्वेऽपि विधानमनुपपन्नमिति तदनुकूलो विचार एव श्रवणम्। उपक्रमापे-

संहाराविति। समस्य वचनम् उपक्रमोपसंहारयोः ऐकरूप्यम् एकलिङ्गमिति सूचनार्थं। तदाद्यन्तयोरिति। प्रकरणाद्यन्तयोरित्यर्थः। तन्मध्ये इति। प्रकरणमध्ये इत्यर्थः॥

[ ३०—ख ]

यथा तत्रैवाद्वितीयवस्तुनि मध्ये तत्त्वमसीति नवकृत्वः प्रतिपादनम्। प्रकरणप्रतिपाद्यस्याद्वितीयवस्तुनः प्रमाणान्तराविषयीकरणमपूर्वता। यथा तत्रैवाद्वितीयवस्तुनो मानान्तराविषयीकरणम्। फलं तु प्रकरणप्रतिपाद्यस्यात्मज्ञानस्य तदनुष्ठानस्य वा तत्र तत्र श्रूयमाणं प्रयोजनम्। यथा तत्र "आचार्यवान्पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्य" इत्यद्वितीयवस्तुज्ञानस्य तत्प्राप्तिः प्रयोजनं श्रूयते। प्रकरणप्रतिपाद्यस्य तत्र तत्र प्रशंसनमर्थवादः। यथा तत्रैव "उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्" इत्यद्वितीयवस्तुप्रशंसनम्॥

तत्रैवेति। छान्दोग्ये इत्यर्थः। मानान्तरेति। तस्य उपनिषन्मात्रगम्यत्वादिति भावः। तदनुष्ठानस्येति। ज्ञानानुकूलश्रवणाद्यनु-

ष्ठानस्येत्यर्थः,श्रवणाद्यनुष्ठानस्योपस्थितत्वात्।तत्प्रयोजनश्रुतिं ताव-दुदाहरति आचार्येति। ज्ञानप्रयोजनश्रुतिं तावदुदाहरति तस्येति। तस्य उत्पन्नतत्वसाक्षात्कारस्य तावदेव चिरं अज्ञाननिवृत्तौ तावानेव विलम्बः यावन्न विमोक्ष्ये यावत्प्रारब्धकर्मणा न विमुक्तो भवतीत्यर्थः।अद्वितीयवस्तुज्ञानस्येत्यग्रे श्रवणाद्यनुष्ठानस्य चेति शेषः। तत्प्राप्तिः ज्ञानप्राप्तिः चैतन्यप्राप्तिश्चेत्यर्थः। आदिश्यते असौ आदेशः अर्थः तम् अर्थम् अप्राक्ष्यः पृष्टवानसीत्यर्थः ॥

[ ३०—ग ]

प्रकरणप्रतिपाद्यार्थसाधने तत्र तत्र श्रूयमाणा युक्तिरुपपत्तिः। यथा तत्र "यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इत्यादावद्वितीयवस्तुसाधने विकारस्य वाचारम्भणमात्रत्वे युक्तिः श्रूयते। मननं तु श्रुतस्याद्वितीयवस्तुनो वेदान्तानुगुणयुक्तिभिरनवरतमनुचिन्तनम्। विजातीयदेहादिप्रत्ययरहिताद्वितीयवस्तुसजातीयप्रत्ययप्रवाहो निदिध्यासनम्। समाधिर्द्विविधः सविकल्पको निर्विकल्पकश्चेति तत्र। सविकल्पको नाम ज्ञातृज्ञानादि-

विकल्पलयानपेक्षयाद्वितीयवस्तुनि तदाकाराकारिताया-श्चित्तवृत्तेरवस्थानम् ॥

अनवरतमिति । शरीरयात्रासमयातिरिक्तसमय इत्यर्थः। व्यवधानेन कृतस्य फलाजनकत्वादिति भावः । ज्ञानादीत्यत्रादिशब्देन ज्ञेयमुच्यते ॥

[ ३०—घ ]

तदा मृन्मयगजादिभानेऽपि मृद्भानवद्द्वैतभानेऽप्यद्वैतं वस्तु भासते । तदुक्तं—

"दृशिस्वरूपं गगनोपमं परं
सकृद्विभातं त्वजमेकमक्षरम् ।
अलेपकं सर्वगतं यदद्वयं
तदेव चाहं सततं विमुक्तमोमिति" ॥

निर्विकल्पकस्तु ज्ञातृज्ञानादिविकल्पलयापेक्षयाद्वितीयवस्तुनि तदाकाराकारितायाश्चित्तवृत्तेरतितरामेकीभावेनावस्थानम् । तदा तु जलाकाराकारितलवणानवभासेन जलमात्रावभासवदद्वितीयवस्त्वाकाराकारितचित्तवृत्त्यनवभासेनाद्वितीयवस्तुमात्रमेवावभासते । ततश्चास्य सुषुप्तेश्चाभेदशङ्का न भवति । उभयत्र वृत्त्यभाने

समानेऽपि तत्सद्भावासद्भावमात्रेणानयोर्भेदोपपत्तेः ॥

द्दशिस्वरूपमिति। चिद्रूपमित्यर्थः। गगनोपममिति। असङ्गमित्यर्थः। सकृदिति। स्वप्रकाशमित्यर्थः। अक्षरं। नाशशून्यम्। अलेपकमिति। लेपः संसारः तच्छून्यमित्यर्थः। तदेव चेति। तथा च न ज्ञातृज्ञेयादिविकल्पलयरहित इति भावः। अतितरामिति। विस्पष्टानवभासनादिति भावः। निर्विकल्पकसमाधेर्निद्रातो विशेषमाह ततश्चेति। यद्यपि सुषुप्तिदशायामविद्यावृत्तिसद्भावोऽस्त्येव तथाप्यन्तःकरणवृत्त्यभावेन वैषम्यम् ॥

[३१]

अस्याङ्गानि यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयः। तत्र "अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः"। "शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः"। करचरणादिसंस्थानविशेषलक्षणानि पद्मकस्वस्तिकादीन्यासनानि। रेचकपूरककुम्भकलक्षणाः प्राणनिग्रहोपायाः प्राणायामाः। इन्द्रियाणां स्वस्वविषयेभ्यः प्रत्याहरणं प्रत्याहारः। अद्वितीयवस्तुन्यन्तरिन्द्रियधारणं धारणा। तत्राद्वितीयवस्तुनि विच्छिद्य विच्छि-

द्यान्तरिन्द्रियवृत्तिप्रवाहो ध्यानम् । समाधिस्तूक्तः सविकल्पक एव ॥

अस्येति। निर्विकल्पकसमाधेरित्यर्थः । समाधिशब्देन सविकल्पकःसमाधिरुच्यते। अस्तेयेति पदच्छेदः। प्रणिधानं सेवनम्। उत्तरो ग्रन्थः स्पष्टः ॥

[३२]

एवमस्याङ्गिनो निर्विकल्पकस्य लयविक्षेपकषायरसास्वादलक्षणाश्चत्वारो विघ्नाः सम्भवन्ति । लयस्तावदखण्डवस्त्वनवलम्बनेन चित्तवृत्तेर्निद्रा । अखण्डवस्त्वनवलम्बनेन चित्तवृत्तेरन्यावलम्बनं विक्षेपः । लयविक्षेपाभावेऽपि चित्तवृत्ते रागादिवासनया स्तब्धीभावादखण्डवस्त्वनवलम्बनं कषायः । अखण्डवस्त्वनवलम्बनेनापि चित्तवृत्तेः सविकल्पकानन्दास्वादनं रसास्वादः । समाध्यारम्भसमये सविकल्पकानन्दास्वादनं वा ॥

[३३]

अनेन विघ्नचतुष्टयेन विरहितं चित्तं निर्वातदीपवदचलं सदखण्डचैतन्यमात्रमवतिष्ठते यदा तदा निर्विकल्पकः समाधिरित्युच्यते । तदुक्तं—

"लये सम्बोधयेच्चित्तं विक्षिप्तं शमयेत्पुनः ।
सकषायं विजानीयाच्छमप्राप्तं न चालयेत् ॥
नास्वादयेद्रसं तत्र निःसङ्गः प्रज्ञया भवेदिति "॥
"यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृतेति" च ॥

विक्षेपादीनां दोषत्वे संमतिमाह तदुक्तमिति ॥

[३४]

अथ जीवन्मुक्तलक्षणमुच्यते । जीवन्मुक्तो नाम स्वस्वरूपाखण्डब्रह्मज्ञानेन तदज्ञानबाधनद्वारा स्वस्वरूपाखण्डब्रह्मणि साक्षात्कृतेऽज्ञानतत्कार्यसञ्चितकर्मसंशयविपर्ययादीनामपि बाधितत्वादखिलबन्धरहितो ब्रह्मनिष्ठः ।

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" ॥

इत्यादिश्रुतेः ॥

प्रसङ्गादाह अथेति । जीवन्मुक्तो नाम ब्रह्मनिष्ठ इति सम्बन्धः । प्रपञ्चसत्वात्कथं ब्रह्मनिष्ठत्वं तत्राह अखिलेति । बन्धराहित्ये हेतुमाह अज्ञानेति । सञ्चितेति । प्रारब्धकर्मणान्तु भोगेनैव क्षयः "नाभुक्तं क्षीयते कर्मेति" वचनात् । न च साञ्चितस्यापि

ज्ञानेन नाशे मानाभावः "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथे-ति" वचनस्यैव मानत्वात् । न च प्रारब्धसञ्चितयोरभेदः प्रायेण काले उद्बुद्धवृत्तिकस्य प्रारब्धत्वात् अनुद्बुद्धवृत्तिकस्य तु सञ्चि-तत्वादिति भावः । अज्ञानादिबाधने हेतुमाह स्वेति । तत्र सम्मतिमाह भिद्यत इति । हृदयग्रन्थिः । चिदचिद्ग्रन्थि-रहंकार इति यावत् ॥

[३५]

अयं तु व्युत्थानसमये मांसशोणितमूत्रपुरीषादिभा-जनेन शरीरेणान्ध्यमान्द्यापटुत्वादिभाजनेनेन्द्रियग्रामेणा-शनापिपासाशोकमोहादिभाजनेनान्तःकरणेन च पूर्वपूर्व-वासनया क्रियमाणानि कर्माणि भुज्यमानानि ज्ञानावि-रुद्धारब्धफलानि च पश्यन्नपि बाधितत्वात्परमार्थतो न पश्यति । यथेन्द्रजालमिति ज्ञानवांस्तदिन्द्रजालं पश्य-न्नपि परमार्थमिदमिति न पश्यति । "सचक्षुरचक्षुरिव सकर्णोऽकर्ण इव" इत्यादिश्रुतेः ।

उक्तं च—

"सुषुप्तवज्जाग्रति यो न पश्यति

द्वयं च पश्यन्नपि चाद्वयत्वतः।
तथा च कुर्वन्नपि निष्क्रियश्च यः
स आत्मविन्नान्य इतीह निश्चयः" इति॥

अज्ञानादिसकलस्य बाधनात्परममुक्तित्वमेव च युक्तं न तु जीवन्मुक्तित्वं तत्राह अयमित्यादिना। व्युत्थानेति। समाधेः सकाशादिति शेषः। ज्ञानेति। ज्ञानाविरुद्धानि च तानि आरब्धफलानि चेति समासः। बाधितत्वादिति। अयं भावः ब्रह्मतत्त्वसाक्षात्कारेण अज्ञानादिसकलप्रपञ्चनिवृत्तावपि भोगैकनाश्यप्रारब्धस्यानिवृत्तेः पुनर्निवृत्तमपि प्रपञ्चं बाधितानुवृत्त्या पश्यति अतो जीवन्मुक्तित्वं। न च तदानीं सकलकार्योपादानभूताज्ञानस्य निवृत्तेः कथं तत्कार्यस्य बाधितानुवृत्त्यापि सत्वम् उपादानाभावे उपादेयस्यायोगादिति वाच्यम्। अज्ञानस्य सर्वथा अनिवृत्तेः। तथा हि अज्ञाने अस्ति शक्तित्रयम्। एका तावत्पारमार्थिकसत्वसम्पादनपटीयसी शक्तिः, तया च शक्त्या प्रपञ्चे पारमार्थिकसत्वं स्फुरति श्रवणाद्यभ्यासपरिपाकवशेन

च समनिवर्त्तते, तस्यां च निवृत्तायां प्रपञ्चः पारमार्थिकतया न स्फुरति किन्तु व्यावहारिकतया । अत अज्ञाने व्यावहारिकसत्वसम्पादनपटीयसी अपरा शक्तिर्विद्यते । सा च शक्तिः आत्मतत्त्वसाक्षात्कारेण निवर्त्तते, निवृत्तायां च तस्यां प्रपञ्चो न व्यावहारिकतया स्फुरति, किन्तु प्रारब्धस्य सत्वात् बाधितानुवृत्त्या स्फुरति । अतः प्रातिभासिकत्वसम्पादनपटीयस्यपि शक्तिरज्ञाने विद्यते । सा च भोगेन प्रारब्धक्षये अन्तिमतत्त्वसाक्षात्कारेण अज्ञानेन सह निवर्त्तते । ततो न प्रपञ्चस्फुरणं । न चात्र मानाभावः । तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिरिति श्रुतेर्मानत्वात् । अत्र चाभिध्यानशब्देन श्रवणाद्यभ्यासपरिपाक उच्यते । तस्माद्विश्वमायानिवृत्तिरिति प्रथमं सम्बन्धः । पारमार्थिकसत्वसम्पादनपटीयस्याः शक्तेर्नाशेन विशिष्टस्य अज्ञानस्यापि नाशान्मायेत्युक्तं । युज्यते अनेनेति योजनम् आत्मतत्वसाक्षात्कारः । तस्मादपि मायानिवृत्तिः व्यावहारिकसत्वसम्पादनपटीयस्याः शक्तेर्नाशेन तद्विशिष्टस्या-

ज्ञानस्यापि नाशात् तत्त्वभावः तत्त्वसाक्षात्कारः । तस्मादन्ते प्रारब्धकर्मणां भोगेन क्षये विश्वमायानिवृत्तिः प्रातिभासिकसत्व-सम्पादनपटीयस्या शक्त्या सहाज्ञानस्य निवृत्तिः । भूयः शब्दश्च पारमार्थिकसत्वसम्पादनपटीयसी व्यावहारिकसत्वसम्पादनप-टीयसी शक्तिविशिष्टाज्ञाननाशापेक्षयाभ्यासार्थक इत्यर्थः । एवं च तत्त्वसाक्षात्कारे विद्यमानेपि प्रारब्धस्य विद्यमानत्वात् न प्रातिभासिकसत्वसम्पादनपटीयस्याः शक्तेस्तद्विशिष्टस्य अज्ञा-नस्य च निवृत्तिरिति युक्तं प्रपञ्चस्य बाधितानुवृत्त्या सत्वम् उपादानस्याज्ञानस्यानिवृत्तेरिति । ततश्च यस्य केवलं बाधिता-नुवृत्त्या सप्रपञ्चः स्फुरति स जीवन्मुक्त इति जीवन्मुक्तिल-क्षणं सिद्धम् ॥ [३६]

अस्य ज्ञानात्पूर्वं विद्यमानानामेवाहारविहारादीनाम-नुवृत्तिवच्छुभवासनानामेवानुवृत्तिर्भवति शुभाशुभयोरौ-दासीन्यं वा ।

तदुक्तं—

"बुद्धाद्वैतसतत्त्वस्य यथेष्टाचरणं यदि ।

शुनां तत्त्वदृशां चैव को भेदोऽशुचिभक्षण" इति ॥
"ब्रह्मवित्त्वं तथा मुक्त्वा स आत्मज्ञो न चेतर" इति ॥

जीवन्मुक्तस्य नाशुभे प्रवृत्तिरित्याह अस्येति। तत्त्वज्ञानस्य तथैव स्वभाव इति भावः ॥

[३७]

तदानीममानित्वादीनि ज्ञानसाधनान्यद्वेष्टृत्वादयः सद्गुणाश्चालङ्कारवदनुवर्त्तन्ते। तदुक्तम्—

"उत्पन्नात्मावबोधस्य ह्यद्वेष्टृत्वादयो गुणाः।
अयत्नतो भवन्त्यस्य न तु साधनरूपिण" इति ॥

तदानीमिति। ज्ञानस्य सिद्धत्वादिति भावः ॥

[३८]

किं बहुनायं देहयात्रामात्रार्थमिच्छानिच्छापरेच्छाप्रापितानि सुखदुःखलक्षणान्यारब्धफलान्यनुभवन्नन्तःकरणाभासादीनामवभासकः संस्तदवसाने प्रत्यगानन्दपरब्रह्मणि प्राणे लीने सत्यज्ञानतत्कार्यसंस्काराणामपि विनाशात्परमकैवल्यमानन्दैकरसमखिलभेदप्रतिभासरहितमखण्डब्रह्मावतिष्ठते। "न तस्य प्राणा उत्क्रामन्ति"

"अत्रैव समवलीयन्ते" "विमुक्तश्च विमुच्यत" इत्यादि श्रुतेः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यसदानन्द-
विरचितो वेदान्तसारः ॥

उपसंहरति किं बहुनेति । तदवसान इति । प्रारब्धक्षये सतीत्यर्थः ॥

अनन्ताङ्घ्रियुगं स्मृत्वा रचिता बालबोधिनी ।
आपदेवेन वेदान्तसारतत्त्वस्य दीपिका ॥

इति श्रीमदनन्तदेवसूनुना आपदेवेन कृता वेदान्तसारदीपिका ॥



# शुद्धाशुद्धिपत्रम् ।

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४ | ८ | मति | सति |
| ५ | १४ | तदनंतरम् | तदनन्तरम् |
| ५ | १४ | अतः अथ | अतोऽथ |
| ७ | ७ | चतुष्ठय | चतुष्टय |
| १० | १४ | प्रसंग | प्रसङ्ग |
| २१ | ११ | इछा | इच्छा |
| २३ | १३ | इछा | इच्छा |
| २३ | १४ | स्येछा | स्येच्छा |
| २४ | १ | दृष्टांतः | दृष्टान्तः |
| २५ | १ | तुछ | तुच्छ |
| २७ | ८ | बिषभेम्य | विषयेभ्यः |
| २९ | ११ | फलेछा | फलेच्छा |
| ३० | ४ | सन्यासस्य | संन्यासस्य |

| | | | |
|---|---|---|---|
| ३० | ६ | सन्यासो | संन्यासो |
| ३० | ११ | सन्यासिन | संन्यासिम |
| ३१ | १ | सन्यासः | संन्यासः |
| ३१ | ९ | सन्यास | संन्यास |
| ३१ | ११ | सन्यास | संन्यास |
| ३२ | १ | सन्यास | संन्यास |
| ३५ | १४ | रात | रेति |
| ३८ | १ | दष्ठ | दृष्ट |
| ५८ | ४ | निष्ट | निष्ठ |
| ८५ | ८ | तत्ममान | तत्समान |
| ८८ | ९ | श्राति | श्रुति |
| ९३ | १६ | अथति | अथेति |
| ९९ | १८ | तिद्वरोध | तद्विरोध |
| १०४ | १४ | तदन्तरर्भूता | तदन्तर्भूता |

—०—